अथसाधारणलग्नबलंस्रग्धरावृत्तेनाह प्रायइति इहवक्ष्यमाणे गर्भाधानादिकृत्येप्रायोबाहुल्येनचंद्रंअंत्याष्टमरिपुतनुगंत्यजजहीहि अंत्यंद्वा
दशं अष्टमंप्रसिद्धं रिपुःषष्ठं तनुर्लग्नं एतान्प्रतिगतंचंद्रंत्यजेति तथाभांशकौत्यज किंलक्षणौभांशकौ मूढनाथौ मूढः नाथौययोस्तौ तथा-
अस्तंगतस्यलग्ननवांशावित्यर्थः पुनः किंलक्षणौ क्रूरेद्धासौ क्रूरग्रहचंद्राणामन्यतमेनयुक्तौ तथाखलांशंत्यज यत्रकुत्रापिलग्नेपापग्रह
नवांशंत्यज तथामृतिगतखचरंत्यज लग्नादष्टमंग्रहंत्यजेदित्यर्थः तथामृत्कृतनुस्थौत्यज मृत्कर्जन्मराशिजन्मलग्नाभ्यामष्टमंत्याज्यम्

प्रायश्चंद्रंत्यजांत्याष्टमरिपुतनुगंभांशकौमूढनाथौक्रूरेद्धासौखलांशंमृतिगतखचरंमृत्कृतस्तौतनुस्थौ सौम्याः
केंद्रत्रिकोणेष्वरिभवसहजेष्वन्यखेटाःप्रशस्ताःसर्वत्रैतत्प्रयोज्यंप्रकरणपठितांस्तद्विशेषान्विदित्वा ॥ २॥ इति
साधारणलग्नबलप्रकरण ॥ ३॥-

तत्पस्तत्पतिः त्याज्यः एतौतनुस्थौत्यजेदित्यर्थः लग्नगोचरमाहसौम्यादिति सौम्याःसौम्यग्र
हाःकेंद्राणिलग्नचतुर्थसप्तमदशमानि त्रिकोणेनवपंचमे एतेषुकेंद्रत्रिकोणेषुसौम्याःग्रहाःप्रशस्ताःअरिभवसहजेषु अन्यखेटाःअरिःषष्ठंभ
वःएकादशंसहजंतृतीयं एषुस्थानेषुअन्यखेटाःसौम्येभ्योन्येपापग्रहाःप्रशस्तास्युःसर्वत्रैतत्प्रयोज्यंएतच्छ्लोकोक्तंसर्वत्रगर्भाधानादिकृत्येप्र
योज्यंसाधारणत्वात् किंकृत्वाप्रकरणपठितांस्तद्विशेषान्विदित्वा पृथक्कृत्यप्रकरणपठितविशेषान्ज्ञात्वा २ ७ ५ ७ ७

अथगर्भाधानंस्रग्धरावृत्तेनाह भोस्कृतार्थिन्कृतौमुदितःसतस्वस्त्रींप्रतियाहि गच्छेत्यन्वयः स्कृतंअर्थयते असौस्कृतार्थीतिस्यसंबोधनं भोस्कृ
तार्थिन् कृतौरजोदर्शनादारभ्यषोडशरात्रयोऋतुः तस्मिन्मुद्हर्षःसंजातोयस्यसमुदितः एवंविधःसन्स्वस्त्रींप्रतिगच्छेत्यर्थः यतोत्रस्त्रीगर्भ
धारणंकरोति अत्रस्त्रीअपिहर्षिताभाव्या तथाचमनुः ऋतुःस्वाभाविकःस्त्रीणांरात्रयःषोडशस्मृताइति किंकृत्वा प्राङ्निंद्यचतुष्कासमदिनं
विवरश्राद्धतत्प्राक्दिनानित्यक्त्वा प्राचांनिशाचतुष्कंपूर्वरात्रिचतुष्टयम् असमदिनंविषमदिनं विवरणादिरात्रितिथिप्रादीनांसंधयः श्राद्ध

स्वस्त्रींप्राङ्निंद्यचतुष्कासमदिनविवरश्राद्धतत्प्राक्दिनानित्यक्त्वामूलंमघांत्येवस्रुकलिजनिभाहानिपर्वाणि
चतौ॥याहीज्यार्कंदुलग्नेविषमभलवगेरुब्दलेभोस्कृतार्थिन्व्यस्तेरेतैरिहेवायुगहनिमुदितःकन्यकेच्छोस्कृचंद्रे १

दिनंतत्प्राक्दिनंतस्यश्राद्धस्यपूर्वदिनंएतानित्यक्तेत्यर्थः एवंमूलंत्यक्त्वा तथामूलमघांत्येत्यक्त्वामूलमघेप्रसिद्धे अंत्यंरेवती एतानित्यक्ते-
त्यर्थः तथावस्रुकलिजनिभाहानित्यक्त्वावसुरष्टमी कलिश्चतुर्दशीजनिभंजन्मनक्षत्रं अहोदिवाएतानित्यक्तेत्यर्थः तथापर्वाणिचत्यक्त्वा
पर्वाणिदर्शपौर्णमासव्यतीपातवैधृतिसंक्रांतिमहापातादीनित्यक्त्वास्त्रियंप्रतिगच्छेत्यर्थः तथाचनारदः रजोदर्शनतोस्पृश्यानार्योदिनचतुष्
यं॥ ततःशुद्धाःक्रियास्वेताःसर्ववर्णेष्वयंविधिरिति वसिष्ठः उपपूर्वेवैधृतिपातयोश्चविष्यांदिवापारिघपूर्वभागेसंध्यासुसर्वास्वपिमात-

पित्रोर्मृतेन्हिपत्नीगमनंविवर्ज्य दिनेषुयुग्मेषुचवक्ष्यमाणयोगैः कृतार्थीस्वसतीमुपेयात् दिनेषयुग्मेषुचकन्यकार्थीहित्वाचगंडांस्तिथिलग्नभा
गान्ज्योतिषार्के कृतौयुग्मनिशिस्वस्त्रींगच्छेत्सुत्राय सद्विधौ मघामूलांत्यपक्षांतभूतदर्शाष्टमी स्त्यजेदिति कैः ईज्यार्केंदुलग्नैः विषमभलवर्गैः
ईज्योगुरुः अर्कः प्रसिद्धः इंदुश्चंद्रः लग्नंप्रसिद्धंएतैर्विषमभलवर्गैः भंराशिः लवोनवांशः विषमराशिविषमनवांशस्थितैरित्यर्थः नकेवलंविष
मभलवर्गैः अपितु उद्बलैः उत् उत्कृष्टंबलंयेषांतानितथातैः अथकन्याकामिनोविशेषमाह भोकन्यके छोइहैव अनंतरोक्तलक्षणेकालेअयुगह्नि
निविषमदिनेसुदिनः सन्स्त्रीप्रतियाहिकैः एतैर्व्यस्तैः एतैईज्यार्केंदुलग्नैः व्यस्तैरिति समभलवर्गैः समराशिसमांशस्थैः तथाचबृहज्जातके ओ

पुंभेर्केज्यारवारेविमिथुनविषमांगांशयोः पुंसवंस्यात्सीमंताख्यंचसत्कृव्ययकृतगृहयोः पर्वरिक्तोनतिथ्याम् ॥

जर्क्षेपुरुषांशकेषुबलिभिर्लग्नार्कगुर्विंदुभिः पुंजन्मप्रवदेत्समांशकगतैर्युग्मेषुतैर्योषितेइति कस्मिन्सति कृचंद्रेशोभनेचंद्रेसति गोचरेणचंद्र
बलेसतीत्यर्थः कृचंद्रेइति अनन्यगतिकं विनासर्वत्रयोज्यं पूर्ववल्लग्नबलं १ अथपुंसवनसीमतोन्नयनेस्रग्धरयाआह पुंभेति पुंभेपुन्नक्षत्रे
पुंन्नक्षत्राणिचैतानिपुष्योहस्तः पुनर्वसुः अभिजित्प्रोष्ठपात्चैव अनुराधाश्वियुक्तथेतिप्रोष्ठपात्पूर्वाभाद्रपदा एषामन्यतमेपुंनक्षत्रे अर्केज्यारवा
रेरविगुरुभौमवारेविमिथुनविषमांगांशयोः अगंच अंशश्चअंगांशौ विगतंमिथुनंयाभ्यांतौविमिथुनौतौचतौ अंगांशौचतथातयोः मिथुनरहि

तेविषमलग्नेविषमनवांशे इत्यर्थः पुसवंपुंसवनंसीमंताख्यंचसीमंतोन्नयनमपिसत्स्यात् नामैकदेशग्रहणेनामग्रहणं कयोःसतोःशुव्ययस्थत
ग्रहयोःसतोःपापग्रहरहितयोःव्ययस्थतभवनयोःसतोरित्यर्थः पर्वरिक्तोनतिथ्यांपूर्णिमामारिक्तातिथिरहिततिथ्यां मासेद्वित्रिप्रसंख्ये प्रथमकं
पाठोक्त्या प्रथमकं पुंसवनं गर्भाधानात्द्वित्रिप्रसंख्येमासिद्वितीयेतृतीयेवामासिसत्स्यात् अपरंसीमंतोन्नयनं तुर्यषष्ठाष्टमेषु गर्भाच्चतुर्यषष्ठाष्टमेषुमासेषु
सत्स्यात्पुंगर्भायलग्नबलमुक्तं ईज्यार्केंदुलग्नैरित्यादिकं तदनयोःपुंसवनसीमंतोन्नयनयोर्योज्यं आद्यःपक्षःशुक्लपक्षश्चयोज्यः नकृष्णःअत्र
गर्भाघ्नोशनांतेषुगुरुशुक्रमौढ्यादिकंनचिंत्यमित्यग्रेवक्ष्यति लग्नबलंपूर्ववत् जातूकर्ण्यः द्वितीयेवातृतीयेवामासिपुंसवनंभवेत् व्यक्तेगर्भे

मासेद्वित्रिप्रसंख्येप्रथमकमपरंतुर्यषष्ठाष्टमेषुप्रोक्तंपुंगर्भलग्नंग्रहबलमनयोर्योज्यमाद्यश्चपक्षः ॥२॥

भवेत्कार्यंसीमंतेनसहाथवा नृसिंहः रिक्तांचपर्वनवमींत्यक्त्वापुंसवनेशुभाः वृत्तशते सीमंतोन्नयनंबुधैस्तुहिनगौपुन्नामधिष्ण्ये स्थितेकुर्यात्पुंस
वनंचसूर्यदिवसेभौमस्यजीवस्यवेत्यादि बृहस्पतिः कुलीरंमिथुनंकन्यांहित्वाशेषाःशुभावहाइति नारदः चतुर्थेमासिषष्ठेवाप्यष्टमेवातदीश्वरे ब
लोपपन्नेदंपत्योश्चंद्रताराबलान्विते अरिक्तापर्वदिवसेकुजजीवार्कवासरे तीक्ष्णमिश्रोग्रवर्ज्येषुपुंलग्नेपुंनवांशके शुद्धेष्टमेजन्मलग्नात्तयोर्लग्नेनने
धने शुभग्रहयुतेदृष्टेपापखेटायुतेक्षिते पंचेष्टिकेचतुर्भिर्वाइष्टैकेंद्विज्यपूर्वकैः स्त्रीणांतुप्रथमेगर्भेसीमंतोन्नयनंशुभं शुभग्रहेषुधीधर्मकेंद्रे

प्ररिभवत्रिषु पापेषुसत्स्वचंद्रेंत्यनिधनाद्यरिवर्जिते क्रूरग्रहणामेकेपलग्नादंत्यात्मजाष्टगः सीमंतिनीं चातद्गर्भबली हंतिनसंशयइति २ ७७७
॥ अथजातकर्मविधिंस्त्रग्धरावृत्तेनाह सूतोप्रसूतौजातायांजातंजातकर्मविदध्यात्कुर्यात् अथकदाचित्सूतकमध्येप्रसूतौजातायांसत्यांस्मार्त
कर्मपरित्यागोराहोरन्यत्रसूतकइतिशास्त्रेणजातकर्मणोवरोधेप्राप्तेतदपवादमाह जनमरणाशौचकेपिअयमर्थः कदाचिज्जातकमृतसूतकयोः
प्रसूतिर्भवतिनदाजातकर्मविषयेसूतकांतरदोषोनास्तीतिभावः सूतकांतरेसत्यपिजातेपुत्रेपितासचैलंस्नानंकुर्यादितिस्वस्वगृह्योक्तकर्मकुर्यादि
त्यर्थः यतः पूर्वाशौचेनैवास्यशुद्धिःपितुरितिकर्तुरुपलक्षणंवातदंतेपूर्वाशौचांतेवाएतस्यांतेवाक्षिप्रादिभिर्नक्षत्रैःकुर्यात् क्षिप्राणिअश्विनीहस्ता

सूतोजातंविदध्याद्दपिजनिमरणाशौचकेवातदंतेक्षिप्रैर्ब्राम्होत्तराभिश्चरमृदुभिरथोनामवर्णाविदध्युः ॥

भिजित्पुष्याः ब्राम्हंरोहिणीउत्तरास्तिस्त्रः चराणिश्रवणत्रयंपुनर्वसुस्वात्यः मृदूनिअनुराधारेवतीमृगाचित्राः एभिरित्यर्थः लग्नबलंपूर्ववत् उक्तं
चतस्मिन्जन्ममुहूर्तेपिसूतकांतेप्यवाशिशोः जातकर्मचकर्तव्यंपितृपूजनपूर्वकं क्षिप्रैश्चरैर्ध्रुवैर्मिश्रैर्द्वादशेप्रथमेन्हिवा केंद्रेगुरौभृगौकार्यंजात
कर्मसनातनमिति प्रजापतिः सूतकेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् कर्तुस्तात्कालिकीशुद्धिः पूर्वाशौचेनशुध्यतीति संवर्तः जातेपुत्रेपितुःस्नानं
सचैलंतुविधीयतेतच्चशीतोदकेनकार्यं तत्रजाबालिः कुर्यान्नैमित्तिकंस्नानंशीताद्भिः काम्यमेवचेति एतच्चरात्रावपिकार्यं तत्रवसिष्ठः पुत्रजन्म

मु॰ मा
१२

निषद्धेन्दतथासंक्रमणेरवेः राहोश्चदर्शनेस्नानंप्रशस्तंनान्यथानिशि तच्चउत्तराभिमुखंकार्यं तदुक्तंतेनैव श्रुत्वाजातंपितापुत्रंसचैलंस्नानमाचरेत् उत्तराभिमुखोभूत्वानद्यांवादेवखातके इति रात्रौउदकादिगमनाशक्तौ विशेषमाह सांख्यायनः दिवाघदाद्धृतं तोयंकुर्वाखर्णयुतंतुतत् रात्रिस्नानेतुसंप्राप्तेस्नापादनलसन्निधाविति अथनामकर्माह अथोनामवर्णाविदध्युः सूतेः सूर्याष्टिविंशाकृतिमितदिवसेइति अयांनंतरंवर्णाः ब्राम्हणादयः क्रमेणसूतेः प्रसूतेः सकाशात् सूर्या १२ष्टी १६विंशा २० कृति २२ मितदिवसेद्वादशषोडशविंशाद्वाविंशमितदिवसे नामविदध्युः कुर्युरित्यर्थः अयमर्थः ब्राम्हणोद्वादशदिवसे क्षत्रियः षोडशेवैश्योविंशतिमिते शूद्रोद्वाविंशतिमितेदिवसे नामकुर्यादित्यर्थः तच्चोक्तं

सूतेः सूर्याष्टिविंशाकृतिमितदिवसेजातभैर्वाचरांगं रिक्ताष्टम्यारमंदान्व्ययगतखचरं प्रोझ्यरात्रिंपराण्हे ३

बृहस्पतिनाद्वादशेदिवसेवापिजन्मतोदिवसेशुभे षोडशेविंशतौचैवद्वाविंशेवर्णतः क्रमादिति अत्रान्येपिविकल्पाःसंति तत्रव्यासः नामधेयंदशम्यांतुकेचिदिच्छंतिसूरयः द्वादशेन्त्याहुरन्येतुमासपूर्णेतथापरे अष्टादशेहनितथावदंत्यन्येमनीषिणइति प्राप्तकालेपिविशेषमाह गर्गः व्यतीपातेचसंक्रांतोग्रहणेवैधृतावपि श्राद्धंविनाशुभंनैवप्राप्तकालेपिमानवः अमासंक्रांतिविष्ट्यादौप्राप्तकालेपिनाचरेदिति यत्रकालनिरोधस्तत्रदोषोनास्ति यस्यांक्रियायांसर्वोक्तकालोमासदिनैरपि तस्यान्नदोषोमूढत्वंवक्रंवाजीवशुक्रयोरिति अथकालातिक्रमेनक्षत्राण्याह

टी॰

१२

जातमैवेति जातमैर्जातकर्मोक्तनक्षत्रैर्मैत्रैः क्षिप्रैरित्यादिभिर्वाकार्यं तदुक्तंनारदेन देशकालोपघाताद्यैः कालातिक्रमणंयदि अनस्तगेभृगा-
वीज्येतत्कार्यंचोत्तरायणे चरस्थिरमृदुक्षिप्रनक्षत्रेशुभवासरे चंद्रताराबलोपेतेदिवसेचशिशोःपितेति अथात्रत्याज्यविशेषमाह चरांगमिति
चरांगंचरलग्नं रिक्ताष्टम्यारमंदान् रिक्ताश्चतुर्थीनवमीचतुर्दश्यः अष्टमीप्रसिद्धा आरो भौमवारः मंदःशनैश्चरः तान्व्ययगतखचरं खच
रंव्ययभागवतं सौम्यंअसौम्यंवा रात्रिःप्रसिद्धा अपराण्होदिनतृतीयोंशः एतान्त्रो यत्यक्त्वा लग्नबलपूर्ववत् तथाचबृहस्पतिः पूर्वाण्हःश्रे
ष्ठइत्युक्तोमध्यंन्होमध्यमःस्मृतः अपराण्हंचरात्रिंच वर्जयेन्नामकर्मणिइति नृसिंहः सायान्हेदुष्टयोगेचशनिभूमिजवारयोः रिक्तापर्वाष्ट-
मीविष्टिःकिंस्तुघ्नंचविशेषतः एतेदोषेषुतेकालेरात्रावपिनकारयेत्इति बृहस्पतिः शुभवारेचषड्वर्गेशुभानांनामसंपदे राशयश्चस्थि
राःश्रेष्ठाद्विःस्वभावाःशुभैर्युताः नृसिंहः लग्नाद्व्ययाष्टमेसर्वेनशुभानामकर्मणिइति केषान्नामकार्यमितिसंग्रहेउक्तं देवालयगजाश्वा
नांवृक्षाणांवापिकूपयोः सर्वोपकरणानांचचिन्हानांयोषितांनृणां काव्यादीनांकवीनांचपश्वादीनांविशेषतः राजप्रसादसंज्ञानांनानाकर्म
विशिष्यतइति ॥२॥

अथपालकारोहणंभूम्युपवेशनंदुग्धपानंनिष्क्रमणंचेतिचतुष्टयंवृत्तेनैकेनाह प्रसूतेःसकाशात् द्वादशेदिवसेपालकेखट्वायांवाअर्भबालकं न्यसेत् निदध्यात् उक्तकालातिक्रमेध्रुवमृदुलघुभैर्वानक्षत्रैर्निदध्यात् लग्नबलंपूर्ववत् सूर्यभाच्चंद्रभंयावत्पंचपंचचतुर्दश। मध्येचसप्तदेयानिबालकस्यहितायवै पूर्वभागेतुरोगस्त्वंदक्षिणेमरणंध्रुवं पश्चिमेविकृतोबालोउत्तरेव्याधिसंभवः शेषेषुमध्यनक्षत्रेबालकस्यहितायवै तथाचोक्तंबृहस्पतिनास्वसंहितायां खट्वारोहस्तुकर्तव्योदशमेद्वादशेपिवा षोडशेदिवसेवापिद्वाविंशेदिवसेपिवा तथाचोक्तंभविष्योत्तरे अष्टमीदिवसेपुण्ये चंद्रताराबलान्विते मृदुध्रुवक्षिप्रभेतुमातावाकुलयोषितः शेषशायिनमाचिंत्यप्राक्शीर्षंविन्यसेच्छिशुमिति भूम्युपवेशनमाह सौम्येति सौ-

जन्माह्नात्द्वादशेन्हिध्रुवमृदुलघुभैर्वान्यसेत्पालकेर्भंसौम्याश्वीज्यध्रुवेंद्रैर्विशुभदिवसेपंचमेमासिदध्यात् ॥

म्योमृगः अश्विनीप्रसिद्धा ईज्यःपुष्यः ध्रुवाणिपूर्वोक्तानि त्र्युत्तरारोहिण्यः इंद्रोज्येष्ठा एभिर्नक्षत्रैः शुभदिवसेरिक्तादिविवर्जितेजन्मतःपंचमेमासिभुविभूम्यांअर्भंनिदध्यात् उपवेशयेदित्यर्थः तथाचोक्तंब्रम्हपुराणे पंचमेचतथामासिभूमौतमुपवेशयेत् तत्रसर्वेग्रहाःशस्ताभौमोप्यत्रविशेषतः तिथिंविवर्जयेद्रिक्तांशस्तान्याःशृणुभानिमे उत्तरात्रितयंसौम्यंपुष्यर्क्षंशक्रदैवतं प्राजापत्यंचहस्तंचशस्तमाश्विनमित्रभं वराहंपूजयेद्देवंपृथिवींचतथाद्विजान् भूभागमुपलिप्याथतत्रकृत्वाथमंडलम् वाद्यपुण्याहशब्देनभूमौतमुपवेशयेदिति उपवेशनमंत्रस्तत्रैवोक्तः

रक्षैनंवस्कंधेदेविसदासर्वगतंशिरः आयुःप्रमाणंसकलंनिक्षिपस्वहरिप्रियेइति दुग्धपानमाह एकत्रिंशेदिनइति एकत्रिंशमितेदिवसे अर्भे
बालकेकंबुनाशंखेनपयः दुग्धंयोज्यंपाययेदित्यर्थः अत्रनृसिंहः एकत्रिंशद्दिनेचैवपयःशंखेनयोजयेदिति अथमातुःस्वल्पपयस्त्वेपक्षां
तरमाह वाऽशननिगदितंभैरिति अन्नप्राशननक्षत्रैर्योज्यं भैरित्यपलक्षणं अन्नप्राशनोक्तंअन्यदपिविचार्यं किंलक्षणेअर्भे व्यग्वाशा
स्येविगतः अगुःराहुर्यस्याःसाव्यगुः सचासौआशाचतस्यांआस्यंमुखंयस्यसतथा तस्मिन्राहुवर्जितदिङ्मुखइत्यर्थः लग्नबलंपूर्ववत् व्यग्वाशा

एकत्रिंशेदिनेवाऽशननिगदितभैःकंबुनायोज्यमर्भेव्यग्वाशास्येपयोथास्यगमवदुदितोनिष्क्रमोमासितुर्ये ४

स्येइत्युपलक्षणं तेनरुद्रयोगिन्यादिकमपिवर्ज्यं तथाचोक्तंज्योतिर्निबंधे योगिनीराहुरुद्रादिमुखंचैवविवर्जयेत् राहुलक्षणं गुरुभान्वोर्वसेत्प्रा
च्यामिंदौशुक्रेचदक्षिणे कालराहुःकुजेप्रत्यक्उत्तरेबुधमंदयोः लक्षणांतरं इंद्रेवायौयमेरौद्रेतोयाग्निशशिराक्षसे यामार्धमुदयाद्राहुर्भ्रमित्येवंदि
गष्टकेइति उदयात्सूर्योदयात् रुद्रलक्षणं हरिसोमवह्निराक्षसयमवरुणानिलहरालयेष्वेवं उदयादिभ्रमतिसदाघटिकारुद्रोमहालयेत्यादि
हरिरिंद्रः अथनिष्क्रमणमाह अथास्यगमवदुदितोनिष्क्रमोमासितुर्ये तुर्येचतुर्थेमासि अस्यार्भकस्यनिष्क्रमोनिष्क्रमणंगमवत्

गमनवत् इतियावत् उदितःउक्तःपूर्वैः अत्रयात्राप्रकरणोक्तंसर्वंयोज्यमित्यर्थः निष्क्रमलक्षणं बृहस्पतिनोक्तं अथनिष्क्रमणंनाम गृहात्प्र-
थमनिर्गमः अकृतायांक्रियायांस्यादायुःश्रीनाशनंशिशोः इति यमः उपनिष्क्रमणंकुर्याच्चतुर्थेमासिसावनइति कारिकायां चतुर्थेमासिपु-
ण्यर्क्षेशुक्ले निष्क्रमणंभवेत् स्नातंस्वलंकृतंस्वाभिःकृतस्वस्त्ययनंशिशुमिति आदायगेहान्निर्गम्यगच्छेयुर्देवतालयं अभ्यर्च्यदेवतांसम्यगा-
शिषोवाचयेदथ कृत्वाप्रदक्षिणंगेहमानयंतिततःस्वसकं मातृस्वसृगृहंगत्वामातुलादेर्गृहंनयेत् तदाशीर्वचनाद्येभ्यदीर्घायुरभिनंदितःज-
यंतस्यमतेनायंलिखितःशिशुनिष्क्रमः स्वगृह्यानुसारंयोजयेत् अथकर्णवेधंमंदाक्रांतयाह मैत्रैःअनूराधारेवतीमृगचित्राभिः क्षिप्रैर्द-

मैत्रैःक्षिप्रैःस्थिरभचरभैर्व्यानिलांभःपकर्क्षैश्चैकाफापौषविनशनिकुजर्क्षांशवारानपास्य ॥

स्त्रार्काभिजिदीज्यभैः स्थिरभचरभैः स्थिराणिउत्तरात्रयरोहिण्यः चराणिश्रवणत्रयपुनर्वसुस्वात्यः तैःकथंभूतैःस्थिरभचरभैः व्यानि
लांभःकपर्क्षैः विगतानिअनिलांभः कपर्क्षाणियेभ्यस्तानितथातैः अनिलःस्वातीअंभपःशततारकाकःर्क्षंरोहिणी तद्रहितैरित्यर्थः चै-
काफापौषुत्वैत्रकार्तिकफाल्गुनपौषेष्वित्यर्थः पुंस्त्रीकर्णौपुरुषस्त्रियोः कर्णौपटुनाकुशलेनसविधियथास्यात्तथादक्षवामादिवेध्यौः
पुरुषस्यदक्षिणकर्णादिःस्त्रियवामकर्णादिभिरित्यर्थः कर्णवेधनेसूचीमाहबृहस्पतिः सौवर्णीराजपुत्रस्यराजतिविप्रवैश्ययोःशूद्रस्य-

त्वायसीसूचीमध्यमाशंगुलात्मिका कर्णवेधविधिस्तु गृह्यपरिशिष्टेउक्तः अथकर्णवेधोवर्षेतृतीयेपंचमेवापुष्येंदुहस्तित्रिचित्रारेवतीषुपूर्वाण्हे प्रा
ङ्मुखउपविश्य दक्षिणेकर्णमभिमंत्रयते भद्रंकर्णेभिरिति सव्यंवक्ष्यंतीवेदिति कुमारायमधुरंदत्वाथावभिंद्यात्ततोब्राम्हणभोजनमिति
किंकृत्वाङ्नशनिकुजर्क्षांशवारानपास्यरविशनिकुजानांऋक्षाणिलग्नानि अंशानवांशाः वाराःप्रसिद्धास्तांस्त्यक्त्वेत्यर्थः पुनःकिंकृत्वारिक्ता
पर्वेश्वरवस्रुतिथीनपास्यरिक्ताश्चतुर्थीनवमी चतुर्दश्यः पूर्वपूर्णिमामावास्येसंक्रांतिश्च ईश्वरतिथिरेकादशीवसुरष्टमी एतानपास्यपुनःकिं
कृत्वारात्रिसंध्येआस्यस्पष्टंपुनःकिंकृत्वासमाब्दमपास्यसमवर्षेत्यक्त्वाविषमवर्षेकर्तव्यमित्यर्थः लग्नबलंप्राग्वत् अत्रनृसिंहः वेध्यौकर्णा

रिक्तापर्वेश्वरवसुतिथीन्रात्रिसंध्येसमाब्दंपुंस्त्रीकर्णौसविधिपटुनादक्षवामादिवेध्यौ ५

वदतस्यविषमेब्देपिवाशिशोः शुक्लपक्षेशुभेवारेचैत्रपुष्योर्जफाल्गुने एकादश्यष्टमीपर्वरिक्तावर्जाःशुभावहाः शिष्टाश्चतिथयः सर्वाःकृ-
ष्णेचात्यत्रिकंविना कर्णद्वयादितिक्षिप्रमृदुभैरुप्यायगेःशुभैः गुरौलग्नेचकेप्याकुरुत्तरास्रुश्रुतिंव्यधेदिति अगस्त्यः द्वयोश्चसंध्ययोर्लग्नेन
कुर्यात्कर्णवेधनं रात्रावपितथालग्नेनक्षत्रातिथिसंधिषु कर्णवेधंनकुर्वीतकुर्याच्चेच्छेदनंभवेदिति बृहस्पतिः मंदार्कारांशवाराःस्युर्वर्ज्याःक
र्णस्यवेधने गुरुशुक्रेंदुजेंदूनांपूज्यावारांशकोदयादिति संग्रहे शातकुंभमयीसूचीवेधनेषुशुभप्रदा राजतीवायसीवापियथाविभवतः

शुभाशुभभूमौप्रांगणेरम्येशुचौदेशेंबरेरवौ संस्थितेवेधयेत्कर्णौस्त्रीपुंसोर्वामदक्षिणौ शुक्लसूत्रसमायुक्तताम्रसूच्याथवेधयेत् वेधात्तृतीयनक्ष
त्रेक्षालयेदुष्णवारिणेति देवलः कर्णरंध्रेरवेश्छायानविशेदग्रजन्मनः तंदृष्ट्वाविलयंयांतिपुण्यौघाश्चपुरातनाइति ॥ ५ ॥ ७ ॥ ७॥
अथान्नप्राशनंवृत्त केनाह जन्मतः षष्ठेमासिअष्टमेवामासेनुःनरस्य अशनंअन्नप्राशनंनिगदितंप्रोक्तं भीरोःकन्यायाःपंचमेसप्तमेवामासे
अशनंप्रोक्तं अत्रनंदाहरिवसुरजनीरिक्तकाः उझंतिमुनयः नंदाःप्रतिपत्षष्ठ्येकादश्यः हरिर्द्वादशीवसुरष्टमी रजनीरात्रिः रिक्ताश्चतुर्थीनव
मीचतुर्दश्यः ताःस्वर्क्षंजन्मनक्षत्रंएकेआचार्या अत्रउझंति तथाचोक्तं जन्मर्क्षेश्रीक्षयंविद्यादिति जन्मर्क्षेतुपुंविवाहान्नप्राशनादिषुबहुभि

मासेषष्ठेष्टमेनुर्निगदितमशनंपंचमेसप्तमेवाभीरोरुझंतिनंदाहरिवसुरजनीरिक्तकास्वर्क्षमेके ॥

गृह्यते तदग्रेवक्ष्यते पुनःकस्मिन् सदृक्काशान्हि दृक्कोदृगणः अंशोनवांशः अहोदिनंएषांसमाहारः सदृक्कांशाहः सतोगृहस्यदृक्कांशाहः
सदृक्काशाहः तस्मिन्कथंभूतेसदृक्कांशान्हि आचांद्रे नविद्यतेचांद्रदृक्काशोयस्मिंतदचांद्रंतस्मिन् चंद्रस्यदृक्कांशाहानि निंद्यानिक्षीणश्चेत्
पूर्णेतुनदोषः अन्येषांशुभग्रहाणांशुभानीत्यर्थः पुनःकस्मिन् ध्रुवमृदुचरभक्षिप्रभे ध्रुवादीनिप्रसिद्धानिपूर्वमेवोक्तानि तत्रेत्यर्थः पुनः
कस्मिन् अजालिमीनांगे अजोमेषः अलिर्वृश्चिकः मीनःप्रसिद्धः एभ्योन्यल्लग्ने मेषवृश्चिकमीनलग्नान्यन्नप्राशनेनशुभानीत्यर्थःका-

स्फसतीषु केंद्रत्रिकोणांत्यमृतिषुविमलास्फसतीषु केंद्राणिप्रथमचतुर्थसप्तदशमानित्रिकोणेनवपंचमे अंत्यंद्वादशंमृतिरष्टमं परवल्लिंगंद्वंद्व
तत्पुरुषयोः एतास्फविमलास्फपापग्रहरहितास्फसतीषु पापग्रहोत्रअनिष्टकारीत्यर्थः इंदुश्चंद्रः अखिलःपूर्णः अंगेलग्नेइष्टः अन्नप्राशनेपू
र्णश्चंद्रोलग्नेशुभइत्यर्थः अन्यलग्नबलंपूर्ववत् अत्रनारदः षष्ठेमास्यष्टमेवापिपुंसांस्त्रीणांतुपंचमे सप्तमेमासिवाकार्यंनवान्नप्राशनंशिशोः
रिक्तांदिनक्षयंनंदांद्वादशीमष्टमीसमां त्यक्त्वान्यतिथयःश्रेष्ठाःप्राशनेशुभवासराइति ज्योतिर्विवरणे जन्मर्क्षेभ्रीक्षयंविघातकृमर्क्षेचातिसौ
रव्यकृत् आधानर्क्षेचबालानांप्राशनेरोगनाशनं बृहन्नारदः जीवसौम्यसितानांतुद्रेक्काणदिवसांशकाः बालान्नप्राशनेशस्तानचंद्रार्कार्किजाःसृ-

सद्द्रेक्कांशान्व्यचांद्रेध्रुवमृदुचरभक्षिप्रभेजालिमिनोनांगेकेंद्रत्रिकोणांत्यमृतिषुविमलास्विंदुरिष्टोखिलोंगेर्द्द

जामितिअर्णवे गोश्वोकुंभस्तुलाकन्यासिंहःकर्किमृगोयमः एताश्वराशयःशस्तानमेषवृषवृश्चिकाइति नारदः चरस्थिरमृदुक्षिप्रनक्षत्रे
षुननैधनेइति रवौलग्नेकुष्ठीत्याह ॥ ६ ॥ ७ ॥ ७ ॥अथैतेषुसंस्कारेषुगुरुशुक्रास्तादिदोषाभावः येषुदोषाःबालत्ववृद्धत्वप्रमाणंशारवेश
स्यमौढ्येकिंनकार्यमिति चतुष्टयंवृत्तेनैकेनाह गर्भाधन्नाशनांतेषुगर्भाधानादिअन्नप्राशनांतेषुकर्मसुगुरुसितयोर्बाल्यवार्धच्चपरमौढ्यंगुरु
शुक्रमूढत्वंनजत्स्यात् नत्यजेत् कस्माद्धेतोः कालस्यरोधात् यतःशास्त्रेगर्भाधानादिअन्नप्राशनांतानांकर्मणांकालनिरोधःकृतोस्तिनस्माद्धेतोःत

थाचमांडव्यः नित्ययानेगृहेजीर्णेप्राशनांतेषुसत्तस्त वधूप्रवेशमांगल्येनमौढ्यंगुरुशुक्रयोरिति हरिगुरुंसिंहस्थितंबृहस्पतिं याम्यमयनंदक्षि
णायनं ऊनाधिमासौ क्षयमासाधिमासौनत्यजेत् कालस्यरोधादित्येतसदंबुध्यावगंतव्यं तद्यथा प्रसूतिसमयएवजातकर्मविहितं तत्रकालनिरो
धात् किमप्यस्तादिकंनचिंत्यं अन्नप्राशनंतु मासेषष्ठेष्टमेवेतिविकल्पेनमासद्वयेविहितं तत्रयस्मिन्मासेमौढ्यादिकंनस्यात्तत्रकर्तव्यं काल
स्यसावकाशत्वात् तयोरपिमासयोर्यदिसिंहस्थगुर्वादिनिरोधःस्यात् सोप्यत्रनचिंतनीयः एवंगर्भाद्यन्नाशनांतेषुविचारणीयं अनन्यगति
कंकुर्यान्नित्यंनैमित्तिकंतथेति स्मरणात् संस्कारक्रमस्तुकात्यायनगृह्य कारिकायामुक्तः गर्भाधानंपुंसवनंसीमंतोन्नयनंततः जातकर्मा–

गर्भाद्यन्नाशनांतेषुनगुरुसितयोर्बाल्यवार्धेचमौढ्यंजत्यात्कालस्यरोधात्धरिगुरुमयनंयाम्यमूनाधिमासौ

भिधेयंचनिष्क्रमप्राशनेक्रमात् चूडोपनयनंवेदव्रतानांच्चतुष्टयं गोदानमेरवल्लोग्नीकोविवाहः षोडशक्रियाइति अनेनक्रमेणगर्भाद्यन्नाशनां
तेषुमौढ्यादिकंबुध्यावलोकयेदित्यर्थः तथाचबृहस्पतिः मासप्रयुक्तकार्येषुमूढत्वंगुरुशुक्रयोः नदोषकृत्तदामासलक्षणोबलवानिति यमोपि
गर्भवार्धिषिकेभृत्येश्राद्धकर्मणिमासिके सपिंडीकरणेनित्ये नाधि मासंविवर्जयेत् भृगुः सीमंतजातकादीनिप्राशनांतानिचक्रमात् कर्तव्यानि
नदोषोस्तिपंचाननगतेगुराविति कात्यायनस्मृतौ गर्भाधानादिका अन्नप्राशनांतामलिम्लुचे आकर्णवेधाःकर्तव्यानान्याइत्याहभास्क

रइति ॥ अस्तादिकंचूडादिषुवर्जनीयमित्याह एतच्चौलादिषूज्झेदिति एतद्गुरुसितास्तादिकंचूडादिषुकर्मस्फउज्झेत्त्यजेत् अथबालत्ववृद्धत्वप्र-
माणमाह अथगुरुसितयोरिति गुरुसितयोर्गुरुशुक्रयोर्बाल्यवार्धे बालत्ववृद्धत्वेनगाहेसप्ताहे सप्ताहंबाल्यं सप्ताहंवार्धक्यमिति बालत्वंवृद्ध-
त्वंबहुविधमस्तितत्रप्रथमःपक्षोथांगीकृतः अथशाखेशस्यअस्तेवर्ज्यमाह अथोशाखेशमौढ्येइति शाखेशोवेदपतिर्वक्ष्यमाणः तस्यमौढ्येअ

एतच्चौलादिषूज्झेदथगुरुसितयोर्बाल्यवार्धे नगाहेचाथोशाखेशमौढ्येव्रतमपिनियमारंभमार्योनकुर्यात् ७

स्तेव्रतंमौंजीबंधानिनिगमारंभमपिवेदारंभमपिआर्यःश्रेष्ठोनकुर्यात् तस्यास्तेव्रतादिकृतेसतिबटोर्मूर्खत्वंस्यात् ननुवेदारंभेमूर्खत्वंघटतेवेदपति
त्वात् व्रतेमूर्खत्वंकिमुक्तं उच्यतेव्रतबंधस्तुवेदाध्ययनार्थंक्रियतेतस्मात्तत्रापिमूर्खत्वंघटते तथाचयाज्ञवल्क्यः उपनीयगुरुःशिष्यंमहाव्याहृति
पूर्वकं वेदमध्यापयेदेनंशौचाचारांश्चशिक्षयेत् प्रतिवेदंब्रम्हचर्यंद्वादशाब्दानिपंचवा ग्रहणांतिकमित्येकेकेशांतश्चैवषोडशेति यज्ञानांतपसां
चैवशुभानांचैवकर्मणां वेदएवद्विजातीनांनिःश्रेयसकरःपरः तथाचकात्यायनगृह्यसूत्रे वेदंसमाप्यस्नायाद्ब्रम्हचर्यंवाष्टाचत्वारिंशकंद्वादशकेप्ये
केगुरुणानुज्ञातइत्यादि ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथचौलंसनिर्णयंवृत्तेकेनाह कार्यंवर्णैरिति चौलं अग्रिमश्लोकेनान्वयः चूडाकरणंमाघादिपंचस्वमासेषु अमधुषुचैत्ररहितेषुगदितंउ
क्तं तथाचोक्तंनारदेन माघादिपंचकेचौलंहित्वाक्षीणविधुंमधुमिति द्वित्रिपंचोन्मितेब्दे द्वितीयेतृतीयेपंचमेवर्षेवाऽचाराद्वा स्वकुलाचार-
तोवा उक्तंच कात्यायनगृह्ये सांवत्सरिकस्यचूडाकरणं तृतीयेवाप्रतिहतेशोडशवर्षस्यकेशांतोयथामंगलंवासर्वेषामिति सांवत्सरिकस्य

चौलंमाघादिपंचस्वमधुषुगदितंद्वित्रिपंचोन्मितेब्देस्वाचाराद्वासगर्भाघदिभवतिजननन्यत्रनोकार्यमेतत् ॥

अतिक्रांताब्दस्येतिहरिहरमिश्रैर्व्याख्यानंकृतं तथाचषड्गुरुशिष्यः आद्येब्देकुर्वतेकेचिपंचमेन्येद्वितीयके उपनीत्यासहैवेतिविकल्पःकुल-
धर्मतइति सगर्भायदिभवतिजननन्यत्रनोकार्यमेतत् अत्रउक्तवर्षेषुद्वित्रिपंचाब्दकेषुजननीकुमारस्यमातायदिसगर्भाभवतिस्यात्तदाएत
च्चौलंनोकार्यम् पंचमाब्दादूर्ध्वंगर्भिण्यांसत्यामपिकार्यमित्यर्थसिद्धम् अत्रनारदः सूनोर्मातरिगर्भिण्यांचूडा कर्मनकारयेत् पंचा

द्वात्मागयोर्ध्वंतु गर्भिण्यामपिकारयेत् उपनयनेन सहक्रियमाणेनदोषइत्याह साकंयत्रोपनीत्याक्रियतइह तदायन्निरोधोनहिस्यादिति य-
त्रउपनीत्या साकंउपनयने नसहक्रियतेतदाइहास्मिन्चौले अयमुक्तोनिरोधश्चैत्रमासमातृगर्भलक्षणोनत्वेवस्यात् तदुक्तंतेनैव सहोप-
नीत्याकुर्याच्चेत्तदादोषोनविद्यतेइति अंबार्नवेनिषेधमाह जत्यादंबार्त्तवेदोव्रतमुपनयनंचाविशुद्धेः शुभार्थीइति अंबार्नवेमातरजस्विअ
दः अनंतरोक्तंचौलमित्यर्थः व्रतंमौंजी उपयमनंविवाहः आविशुद्धेः शुद्धिपर्यंतंशुभार्थीनरः एतत्त्रयंजत्यात् नकुर्यादित्यर्थः तथाचमनु

साकंयत्रोपनीत्याक्रियतइहतदायंनिरोधोनहिस्याज्जत्यादंबार्तवेदोव्रतमुपयमनंचाविशुद्धेःशुभार्थी ८

स्मृतौ उद्वाहव्रतचूडासु मातायदिरजस्वला तदानमंगलंकार्यंशुद्धौकार्यंशुभेप्सुभिः अन्यमुहूर्तालाभेकारिकानिबंधेशांतिकमुक्तं अलाभे-
शुभमुहूर्तस्यरजोदोषे तुसंस्थिते श्रियंसंपूज्यतत्कुर्याद्वृत्रहत्याभयंकरीं हैमींमाषमितांपद्मांश्रीसूक्तविधिनार्चयेत् प्रत्यृचंपापसंहुत्वाभि-
षिच्यशुभमाचरेत् सूतिकोदक्ययोः शुद्धौगांदद्याद्धेमपूर्वकम् मासेकर्मणिशुक्तिःस्यादितरस्मिन्नशुद्धातीति उदक्यारजस्वला ॥ ८ ॥

अथवर्णविशेषेणवारविशेषंतथानक्षत्राणिलग्नबलंचवृत्तेनेकेनाह वर्णैर्ब्राह्मणादिभिः यथाक्रमेणइनारार्किशनिषुचौलकर्मकार्यमित्यन्वयः इनः
सूर्यः आरोभौमः आर्किःशनिः शनिःप्रसिद्धः तेष्वित्यर्थः एतदुक्तंभवति विप्रेणरविवारे क्षत्रियेणभौमवारे वैश्येनशनिवारे शूद्रेणापिशनि
वारे चौलंकर्तव्यमित्यर्थः शूद्रस्यद्वादशसंस्काराउक्ताः वेदोव्रतोपनयनंमहानाम्नीमहाव्रतम् विनाद्वादशशूद्राणांसंस्कारानाममंत्रतइतिनिखि
लैरिति निखिलैश्चतुर्भिर्वर्णैरविशेषेणज्ञत्रयेबुधत्रयेयेशुक्रसोमेशुक्लपक्षगतसोमवारेकार्यम् कृष्णपक्षेसोमवारोतिनिंदितःक्षीणत्वात् अ
त्रनारदः अपर्वरिक्तातिथिषुशुक्रेज्यज्ञेंदुवासरेइति बृहस्पतिः सोमवारःसितेपक्षेकृष्णपक्षेतिगर्हितः बुधवारःशुभःप्रोक्तःपापग्रहयुते

कार्यंवर्णैरिनारार्किशनिषुनिखिलैर्ज्ञत्रयेशुक्रसोमेव्यंत्यद्व्यादित्यशाक्रेंदुभिरिनहरितस्त्रीत्रिभैश्चौलकर्म॥

बुधेपापग्रहाणांवारादोविप्राणांशुभदोरविः क्षत्रियाणांक्षमासूनुर्विट्शूद्राणांशनिःशुभइति कैः व्यंत्यद्व्यादित्यशाक्रेंदुभिः अंत्याद्वेइतिव्यं
त्यंरेवत्यश्विनो व्यादित्यंपुनर्वसूपुष्योशाक्रंज्येष्ठाइंदुर्मृगःतैः पुनःकैः इनहरितस्त्रीत्रिभैः इनोहस्तः हरिःश्रवणः ताभ्यांत्रित्रिभैः हस्तात्रिभिः
श्रवणात्रिभिरित्यर्थः तथाचनारदः दस्रादितीज्यचंद्रेंद्रपूषभानिशुभान्यतः चौलकर्मणिहस्तर्क्षात्त्रीणित्रीणिचविष्णुभादिति व्यूने-
र्कारार्किशुक्राः अत्रचौलेमृत्युदास्युः व्यूनेसप्तमे अर्कारार्किशुक्राः अर्कःसूर्यः आरोभौमः अर्कस्यापत्यमार्किःशनिःशुक्रःप्र

सिद्धः एतेचत्वारोमृत्युदाइति चतुर्णांसमानंफलमुक्तं वसिष्टेनात्रविशेषफलमुक्तम् जामित्रेभास्करेक्षौरेमृत्युः स्याद्भूमिजेतथा शुक्रेसौख्य
विनाशःस्यान्मंदभाग्यंशनैश्चरइति अत्रचतुर्णामपिसामान्येनमृत्युफलमुक्तम् तद्वारिद्र्यान्मरणंवरमितिन्यायेननदोषः गतकविनिखिलामृ
त्युगामृत्युदास्युः गतःकविः शुक्रोयेभ्यस्तेगतकवयः तेचतेनिखिलाश्चशुक्ररहिताः सर्वेमृत्युगाः अष्टमगामृत्युदास्युः अत्रबृहस्पतिः
अष्टमस्थानगाःसर्वेनेष्टाशुक्रविवर्जिताः शुक्रस्तुनिधनेक्षौरेसर्वसंपत्प्रदःशिशोरिति व्यब्जाःसंतीत्यइष्टाः विगतःअब्जःचंद्रोयेभ्यस्तेव्य

घूनेर्कारार्किशुक्रागतकविनिखिलामृत्युगामृत्युदास्युर्व्यब्जाःसंतोंत्यइष्टास्त्यजगुरुशशिनोरात्रिसंध्येचरिक्ताः॥९॥

ब्जाः एवंविधासंतोसद्ग्रहाःचंद्ररहिताः सद्ग्रहाःअत्येद्वादशेइष्टाःशोभनास्युः नारदः चौलान्नप्राशनेशस्ताःसौम्यरंध्रव्ययोपगाइति अन्यच्च
ननेधनेभेशीतांशोषष्ठाष्टांत्यविवर्जितइतितस्यैववचनम् अन्यल्लग्नबलंपूर्ववत् त्यजगुरुशशिनोरात्रिसंध्येचरिक्ताःगुरुःषष्ठीशशीपौर्णिमास्य
ष्टमन्यत् क्रूरवारंनिशांरिक्तांषष्ठींसंध्यांचजन्मभंसद्भिर्विवर्जयेदेतन्नारदस्यवचोयथेति॥ ९ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथप्रसंगात्क्षौरनिर्णयंसार्धवृत्तेनाह भुक्तः कृतभोजनः अभ्यक्तः कृताभ्यंगः उपवासीप्रसिद्धः ईश्वरजनोराजसेवकः समर्थोवा युवती स्त्रीसौभाग्यवती प्राग्वयस्का: प्रथमवयस्काः पंचाशद्वर्षपर्यंतंपूर्ववयः योगीराजयोगीगीतादौप्रसिद्धः यात्रायुद्धोन्मुखाः यात्राप्रयाणं युद्धंप्रसिद्धम् तौप्रतियेउन्मुखाः प्रचलिताः यात्रोन्मुखायुद्धोन्मुखाश्चेत्यर्थः अस्त्यंबकोजीवत्पितृकः कृतदिनविधिः आन्हिकं यैः कृतदिनविधयः तेनमुंड्याः मुंडनार्हानभवंति अवश्यकार्यंहितेइत्युत्तरश्लोकोक्तमात्रानुसंधेयम् यत्रावश्यकमुंडनकारणंभवतितत्रावश्यंमुंड्याः अथ

भुक्ताभ्यक्तोपवासीश्वरजनयुवति प्राग्वयस्काश्चयोगीयात्रायुद्धोन्मुखायेकृतदिनविधयोस्त्यंबकास्तेनमुंड्याः
सीमंतोर्ध्वंनपत्न्युर्नखकचलवनंदूरदेशप्रयाणंवृक्षछेदःसमुद्राप्लुतिमृतहरणेस्याद्ध तेवश्यकार्यात् ॥ १० ॥

क्षौरनिषेधप्रसंगाद्गुर्विणीपतेर्निषिध्यंसापवादमाह सीमंतोर्ध्वमिति सीमंतोर्ध्वंसीमंतोन्नयनादूर्ध्वंपत्न्युः कृतसीमंतसंस्कारायाः पत्न्युर्भर्तुरवश्य कार्यंहितेनखकचलवनादिकंनस्यात् नखकचलवनं नखकेशछेदनं अन्यत्सुगमं अवश्यकार्यंहितेनस्यादित्यनेन आवश्यकेनदोषइत्यर्थासिद्धम् यथापितृमरणेक्षौरादि देशविप्लवेदेशांतरगमनइत्यादिविचारणयाआवश्यकेनदोषइत्यर्थः कृताग्न्याधानस्यमुंडनपक्षांगीकारेमुंडनमावश्यकंमासिमास्युपासनीकस्यपक्षेपक्षेग्निहोत्रिणइति ॥ १० ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथोक्तेभ्योन्येषांक्षौरार्थंनक्षत्रादिकमाह चौलोक्तभादौक्षौरंगदितंप्रोक्तम् चौलार्थमुक्तश्चौलोक्तः सचासौभादिश्चतस्मिन्नक्षत्रतिथ्यादि
कालेक्षौरंगदितंप्रोक्तम् अथक्षौरनिमित्तान्याह रविक्षेत्रगंगाध्वराग्न्याधानेपित्रोर्विनाशेत्यादि रविक्षेत्रंभास्करक्षेत्रम् गंगाप्रसिद्धा अध्व
रोयागः अग्न्याधानंअग्निहोत्रम् तस्मिन्पित्रोर्विनाशोमरणंतस्मिन् द्विजनृपकथनेब्राम्हणाज्ञायां राजाज्ञायांचसत्यां सर्वदाक्षौरंइष्टंस्यात्
क्षौरनक्षत्रादिनियमोनास्तीत्यर्थः तदुक्तंवृत्तशते भक्ताभ्यक्तनिरासनैरित्यादि रत्नमालायां आज्ञयानरपातेर्द्विजन्मनामित्यादि वृहस्प

क्षौरंचौलोक्तभादौगदितमथरविक्षेत्रगंगाध्वराग्न्याधानेपित्रोर्विनाशेद्विजनृपकथनेसर्वदाक्षौरमिष्टं॥

तिः राजकार्येनियुक्तानांनराणांभूपसेविनाम् श्मश्रुलोमनखच्छेदेनास्तिकालविशोधनम् ज्योतिर्निबंधे राजयोगीपुरंध्रीचमातापित्रोश्च
जीवितोः मुंडनंसर्वतीर्थेषुनकुर्याद्गुर्विणीपतिः स्मृत्यंतरे सिंधुस्नानंद्रुमच्छेदंवपनंप्रेतवाहनं विदेशगमनंचैवनकुर्याद्गुर्विणीपतिः क्षौरंनैमि
त्तिकंकुर्यान्निषेधोनत्वपिध्रुवम् पित्रोःप्रेतविधानंचनदोषस्तत्रविद्यते गंगायांभास्करक्षेत्रेमातापित्रोर्मृतेऽहनि आधानेसोमपानेचषट्

सक्षौरं विधीयते अंतर्वल्त्यांतु जायायांतीर्थेक्षौरंनकारयेत् प्रेतवाहादिकंनैवसीमंतोन्नयनादतु पंचाशद्धायनात्पूर्वक्षौरंनैमित्तिकंविना न-
कुर्यान्न तऊर्ध्वं तुस्वेच्छयावपनंचरेत्इति अथाक्षरारंभंवृत्तार्धेनाह। मित्रत्र्यर्केति मित्रादिभिर्नक्षत्रैः जन्मतः पंचमेवर्षेव्रतात् व्रतबंधात्प्राक् प्र
थमं विद्यारंभोक्तकालेवक्ष्यमाणलक्षणे अक्षरविधिः प्रथमाक्षरारंभविधिः शुभस्यादित्यध्याहारः कस्मिन्सति सौम्यसंज्ञे अयने अर्के-

मित्रत्र्यर्कादितींद्रांतिमहरितुरगैः पंचमेब्देव्रतात्प्राक् विद्यारंभोक्तकालेक्षरविधिरघटेसौम्यसंज्ञेयनेर्के ११

सति कथंभूते सौम्यसंज्ञे अयने अघटे नविद्यते घटोयस्मिन्तथा तस्मिन्कुंभरहितउत्तरायणेत्यर्थः बृहस्पतितुल्ये अयनलक्षणं कर्किमृगादि
षट्केतेचायनेदक्षिणसौम्यायनेस्तइति मित्रमनुराधा त्र्यर्कहस्तत्रयं अदितिःपुनर्वसुः इंद्रोज्येष्ठा अंतिमंरेवती हरिःश्रवणः तुरंगोश्विनी शेषं
प्रथममेवंव्याख्यातं व्रतात्प्रागित्यनेनव्रतबंधादुपरिनिषेधोअर्थसिद्धः पंचमेवर्षेपठणस्यच्याव्रतबंधोग्रेवक्ष्यति तथाचोक्तंबृहस्पतिना द्वितीयज

न्मतःपूर्वमारभेताक्षरान्सुधीरिति नृसिंहः अक्षरस्वीकृतिःप्रोक्ताप्राप्तेपंचमहायज्ञे उत्तरायणगेसूर्येकुंभमासंविवर्जयेदिति ॥ ११ ॥ ७ ॥ ७ ॥
अथब्रम्हक्षत्रविशांमुख्यंगौणंचव्रतबंधकालंवृत्तेनाह गर्भतः गर्भाधानाज्जन्मतोवाअष्टशिवरविमितेअब्देविप्रादेर्व्रतंस्यात् विप्रस्याष्टमे क्ष-
त्रियस्यशिवमिते एकादशेवर्षेस्यात् वैश्यस्यरविमिते द्वादशेवर्षेस्यात् अत्रस्वस्ववर्षेजीवेगुरौअनिष्टेऽशुभेसत्यपिव्रतंकार्यं क्व अनिमिषर
विमधौ अनिमिषेरविः अनिमिषरविः अनिमिषरविणाविशिष्टोमधुः अनिमिषरविमधुः तस्मिन्मीनस्थेरवौसतिचैत्रेव्रतंकर्तव्यमित्यर्थः
अब्दस्यदार्ढ्यात् वर्षबलात् तदुक्तंसंग्रहे शुद्धिर्नविद्यतेयस्यवर्षेप्राप्तेष्टमेयदि चैत्रेमीनगतेभानौतस्योपनयनंशुभंजन्मभादष्टके सिंहे

विप्रादेर्गर्भतोब्देष्टशिवरविमितेजन्मतोवाव्रतंस्यादत्रानिष्टेपिजीवेनिमिषरविमधौकार्यमब्दस्यदार्ढ्यात् ॥

नीचेवाशत्रुभेगुरौ मौंजीबंधःशुभप्रोक्तः चैत्रेमीनगतेरवौ अशुभेब्देग्रहाःसर्वेशुभगोचरगाअपि शांतिभावाच्छुभंनैवयात्यष्टःकालमृत्युकव
त्इति अथगौणकालफलमाह स्वाब्दादूर्ध्वक्रमादिति स्वाब्दात्स्ववर्षादूर्ध्वक्रमाद्द्विगुणितशरदः द्विगुणिताचासौशरच्चद्विगुणितशरद्वर्षं तां
मर्यादीकृत्येति अथतस्याः अब्दक्रमेणनिंद्यं तद्यथा ब्राम्हणस्याष्टमंवर्षमुख्यंतद्द्विगुणितंषोडशं अष्टवर्षात्षोडशवर्षपर्यंतंब्राम्हणस्य
एकादशवर्षात् द्वाविंशवर्षपर्यंतंक्षत्रियस्य द्वादशवर्षाच्चतुर्विंशतिवर्षपर्यंतंवैश्यस्य अब्दक्रमेणोत्तरोत्तरंनिंद्यं अर्थादतऊर्ध्वंअनधिकारि

णोभवंतितदुक्तंसंग्रहे नृपा १६ कृति २२ जिना २४ ब्दांतं नातिकालस्ततःपरं पातित्यंस्यादग्रजादेर्व्रात्यस्तोमोविशोधनमिति त-
थाचकात्यायनगृह्ये आषोडशाद्ब्राम्हणस्यानतीतः कालोभवत्याद्वाविंशाद्राजन्यस्याचतुर्विंशाद्वैश्यस्यातऊर्ध्वंपतितसावित्रीकाभवंतिनै-
नानुपनयेयुर्नाध्यापयेयुर्नयाजयेयुर्नचैभिर्व्यवहरेयुः कालातिक्रमेनियतवत्त्रिपुरुषंपतितसावित्रीकाणामपत्येसंस्कारोनाध्यापनंतेषांसं-



स्वाब्दादूर्ध्वंक्रमाद्राद्विगुणितशरदोनिंद्यमब्दक्रमेणपंचाषांकाब्दतोवाप्रपठनरुचितःशस्तमेषांतदाहुः१२

स्कारेष्फव्रात्यस्तोमेनेष्ट्वाकामधीयीरन्व्यवहार्याभवंतीतिवचनादिति अथस्वाब्दात्प्रागपिअध्ययनोत्कटत्वयादुपनयनकालमाह पंचाषां
काब्दतोवेति पंचमाष्टमनववर्षेभ्यःसकाशादेषांब्रम्हक्षत्रविशांक्रमेणपठनरुचितःवेदादिपठणउच्यातद्भूतंशस्तमाहुर्मुनयः उक्तंचसंग्रहे
ब्रम्हवर्चसमूर्जश्चविद्यायुःश्रीर्यशःसुखं विप्रादेरुपनीतस्यपंचाषांब्दांकतःफलं ॥१२॥ ७ ॥ ७ ॥ ७ ॥

अथात्र गुरुबलाबलं वृत्तेनैकेनाह राशेरिति राशेर्जन्मराशेः सकाशात् षट्त्र्याद्यखस्थो गुरुः इहास्मिन्व्रतबंधे पूजया शुभदः स्यात् षट्ष
ष्ठं त्रि त्रितृतीयम् आद्यं जन्मराशिः खं दशमं एषु तिष्ठतीति तथा तत्रापि पूजयापि प्रांत्यो द्वादशः अंबु सुखं तुर्यः अष्टमः न शुभदः स्यात् पूज
यापि अशुभदः स्यादित्यर्थः सयदि निजगृहगः स्वगृहगः धनुर्मीनग इत्यर्थः तुंगगो वा यदि भवति तदा इह दुष्टस्थानेषु वर्तमानः शस्तः स्या-
त् अस्य तुंगं कर्कटः तदुक्तं बृहज्जातके अजवृषभमृगांगनाकुलीरा झषवणिजौ च दिवाकरादितुंगाः दश १० शिखि ३ मनुयुक् २८ तिथीं

राशेः षट्त्र्याद्यखस्थो गुरुरिह शुभदः पूजया स्यात्तथापि प्रांत्यांबुस्थोष्टमो नो यदि निज गृहगस्तुंगगो वाथ शस्ताः॥
एवं कन्यर्क्षतः स्यादतितर गुणिनो लब्धये वातिकाले निष्टोपीह द्विरर्च्योष्टम भवनगतः शोभनः स्यात्त्रिरर्च्यः॥ १३॥

५ द्वियांशै ५ स्त्रिनवक २७ विंशतिभिश्च तेस्तनीचा इति अर्थदुक्तस्थाने भोन्यस्थानगः शुभदः स्यात् एवं कन्यर्क्षतः स्यात् कन्यर्क्षतः क-
न्याराशेः सकाशात् एवमुक्तं शुभाशुभः स्यात् अतितरगुणिनो वरस्य लब्धये अतिकाले वा अनिष्टोपि गुरु द्वादशचतुर्थाष्टम द्विरर्च्यः षट्त्र्याद्यख
स्थस्य शास्त्रे या पूजोक्ता तस्माणतो द्विरर्च्यः तेन द्विगुणार्चनेन न शोभनः स्यात् एवं सामान्येनोक्त्वा अष्टमस्य विशेषमाह अष्टभवनगतः स्त्रिर
र्च्यः तेन शोभनः स्यात् अत्र बृहस्पतिः झषचापकुलीरस्थो जीवोप्यशुभगोचरः अतिशोभन नांदद्यात् विवाहोपनयनादिषु व्रते जन्मत्रि-

मा

मु॰मा॰
२२

खारिस्थोजीवोपीष्टोर्च्चनंसकृत् शुभोतिकालोतुर्यषष्ठव्ययस्थोद्विगुणार्च्चनात् उद्वाहतत्त्वे कन्यर्क्षाद्विसुताघनायनवमेश्रेष्ठोगुरुश्चान्य
थापूज्योष्टांत्यसुखेतिकालइहतुप्राज्ञोर्द्विरर्च्यःशुभः रिःफांबुत्रिधिनाभ्रमेयेदिग्गेहैःश्रेष्ठोपिविद्धोघसन्वामाद्विदु इहेष्टदोननिधनेवेध
स्त्रिरर्च्यःशुभइति ॥ १३ ॥ अथगुरोर्वामवेधमाह द्वीषायागांकसंस्थोगुरुस्तदाशुभःस्यात् तदाकदा यदिव्ययजलनिधनत्र्यभ्र
गैःखचरैर्नोविद्धःस्यात् द्वि द्वितीयं इषुपंचमं आयएकादशं अगाःसप्तमं अंकाःनवमं एतत्संस्थोगुरुःव्ययंद्वादशंजलंचतुर्थं निधनं अ

द्वीषायागांकसंस्थोव्ययजलनिधनत्र्यभ्रगैश्चेन्नविद्धःशस्तोनिष्टोपिवामंशुभइहखचरैर्वेधितोनोष्टमस्थः
॥शुक्लेमाघादिपंचस्विनशुभदिवसेप्राग्दलेन्होव्रतंसत्यस्कानध्यायरिक्तातिथिमुनिमदनाश्चंद्रभागंप्रदोषं१४

ष्टमं त्रितृतीयं अभ्रंदशमं एतत्संस्थैःखचरैः यदिनोविद्धोभवतितदाशुभःस्यात् २।५।११।७।९।१२।४।८।३।१०। वेधितश्चेदशु
भइत्यर्थः अनिष्टोपिव्ययजलनिधनत्र्यभ्रगोपिवामंविद्धःसन् द्वीषायागांकसंस्थैःखचरैः वेधितःसन्नित्यर्थः इहअस्मिन्व्रतबंधेविवाहे
वाशुभः नोष्टमस्थः अष्टमस्थोवेधितोनशुभदःस्यादित्यर्थः सोतिकालादौत्रिगुणार्चनेनैवशुभःस्यात् तथाचबृहस्पतिः रजस्वलायदाक
न्यागुरुशुद्धिंनचिंतयेत् अष्टमेपिप्रकर्तव्योविवाहस्त्रिगुणार्चनात् अथोपनयनेमासादिमाह शुक्लइति शुक्लेशुक्लपक्षेमाघादिपंचमा

टी॰
२२

सेषु ज्येष्ठांत्येषु इनशुभदिवसे इनःसूर्यःशुभः वर्धमानेंदुः गुरुबुधशुक्राः एषांदिवसः तस्मिन् अहः प्राग्दलेदिवसस्यपूर्वार्धेव्रतमुपन
यनंसत्शुभंस्यात् किंकृत्वा अनध्यायरिक्तातिथिमुनिमदनान् चंद्रभागंप्रदोषंत्यक्त्वा अनध्यायाः वक्ष्यमाणाः रिक्तातिथियोःचतुर्थीनवमी
चतुर्दश्यः मुनिःसप्तमी मदनस्त्रयोदशी एतान् चंद्रभागः कर्कांशः पापांशादिकंपुरैवनिषेधितम् प्रदोषोनध्यायप्रकरणोक्तः तंत्यक्त्वा ॥ १४
अथव्रतबंधेन क्षत्राण्याह स्पष्टं उक्तंच मघाचभरणीज्येष्ठाविशाखाचैवकृत्तिका नक्षत्रपंचकंप्राज्ञैर्नग्राह्यंव्रतबंधने वेदेशेवेदपद्धतौ ज्ञेबु

शस्तोद्वीशाम्निशाक्रांतकपितृरहितैःसर्वभेमौंजीबंधोवेदेशेज्ञेबलाढ्येगुरुसितकुजवित्संज्ञकावेदपाःस्युः॥
स्वर्क्षेन्वांशेषुसौम्याःश्रुतिपतिरपिचेत्केंद्रकोणस्थितास्युर्वर्णीवेदार्थवेत्तापशुगृहधनवानत्रमंदेंत्यसेवी १५

धेबलाढ्येसति स्थानादिनाबलसमृद्धेसति तेकेगुरुसितकुजवित्संज्ञकाः क्रमात् वेदपाः वेदाधिपतयः स्युः गुरुः ऋग्वेदस्य शुक्रोयजुर्वेदस्य कुजः
सामवेदस्यवित् बुधोथर्वणवेदस्य पतिरित्यर्थः लग्नगोचरमाह स्वर्क्षेत्र्चांशेषुसौम्याइति सौम्याःस्वोच्चस्वभागांशेषु वर्तमानाःश्रुतिपतिरपिवेदप
तिरपिस्वोच्चस्वभांशेवर्तमानश्चेद्यदिकेंद्रकोणेस्थितास्युः वर्णीब्रम्हचारीवेदार्थवेत्तास्यात् नकेवलंवेदार्थवेत्तास्यात् अपितुपशुगृहधनवान्स्यात्
अत्रकेंद्रकोणेशनौमंदेसति अंत्यसेवी अंत्यसेवकःस्यात्तस्मात्केंद्रकोणेशनिर्नभवितव्यः उक्तंचसंग्रहे केंद्रस्थितैररिनाचैर्नृपसेविविट्क्रियोश्चवृत्तिश्च

वेदाभ्यासी यज्वाकतुकर्ताहीनसेवकोभवति ॥ १९॥ ॥ अथलग्नभंगानाह चंद्र इति चंद्रः क्रूराः क्रूरग्रहाः विलग्नेतनौ शशिसित तनुपाः षष्ठगेहे शशीचंद्रःसितःशुक्रः तनुपोलग्नपःषष्ठगेहे सितःशुक्रः अंत्येद्वादशस्थाने शेषंसकगमं सर्वेरंध्रेअष्टमस्थाने एतेप्रत्येकंबहुधाः बहुमारकाभवंति किंचक्वचित् अन्यलग्नाभावेतनुगःलग्नः इनः रविः श्रेष्ठः उक्तंचमौंजीपटले शुभदोबलवान्भानुर्लग्नेपोदशमस्तथा सर्वशाखाधिपोयस्मात्सर्वेषांव्रतबंधने सर्वशाखाधिपोभानुः केचिदूचुर्महर्षयः तस्मादृत्यंतराभावेलग्नस्थो र्कःप्रशस्यते उच्चेंदुरेकइति एकेमुन-

चंद्रक्रूराविलग्नेशशिसिततनुपाःषष्ठगेहेसितोंत्येसर्वेरंध्रेबहुघ्नाःक्वचतनुगइनःश्रेष्ठउच्चेंदुरेके ॥

यः उच्चेंदुः उच्चस्थचंद्रः तनुगश्चश्रेष्ठइतिवदंति तद्वाक्यं चंद्रोदयेभिशस्तःस्यात्क्षयोरोगीसितेतरे सितेपक्षेभवेद्यज्वास्वभेतुंगेविशेषतइ-ति अस्यार्थः सितेतरेकृष्णपक्षेचंद्रोदयेचंद्रयुक्तलग्नेसतिव्रतीअभिशस्तःस्यात् क्षयोरोगीचस्यात् अभिशस्तोनाममिथ्याभिशस्तःमिथ्याभिशंसी अनेनेदंपातकंकृतमितियल्लंकामिथ्यावदंतिसोभिशस्तः क्षयरोगीस्यात्इति कृष्णपक्षेलग्नस्थचंद्रफलमुक्तं सितपक्षेभवेद्यज्वेतिवाक्यंस्पष्टं अयंश्लोकःपुनःसंस्कारविषयइवभाति यतोकृष्णपक्षेव्रतबंधेसद्रिस्थफलमुक्तं तस्यदिवाअसंभवात् पुनःसंस्कार

स्यतु अहः कर्मलोपभयात् रात्रावपिसंस्कारोविहितोनान्यस्य प्रथमव्रतबंधे तु सर्वैर्ग्रंथकारैर्दिवैव पूर्वाण्हेविहितोनरात्रौ अतः कारणादिदंवचनं पुनःसंस्कारनिमित्तानिधर्मशास्त्रप्रसिद्धानिताद्दृश्यंवाक्यंरत्नमालायां त्रिषट्खगोर्कस्त्रिधनास्तकर्मगश्चंद्रस्त्रिषष्ठाः शनिराहुभौमाः सर्वेचलाभेचत्रिकोणकेंद्रगाःशुभाश्शुभास्युर्व्रतबंधकालइति अत्रतृतीयस्यषष्ठस्यसूर्यस्यरात्रिगतलग्नेसंभवः नारदेनतुलग्नस्थचंद्रोनिंदितएव तद्वाक्यमेवं स्वोच्चसंस्थोपिशीनांशुभ्रवृतिनोयदिलग्नगः तंकरोतिशिशुं निःस्वसततंक्षयरोगिणमिति अन्यलग्नबलंपूर्ववत्

**विद्यांमौंज्युक्तकाले स्थिरचरहरिजित्र्युत्तरब्राम्हहीने मौंज्याऊर्ध्वंगणेशं गिरमपिविधिवत्पूजयित्वारभेत ॥१६॥**

अथविद्यारंभंवृत्तार्धेनाह विद्यांमौंज्युक्तकालइति मौंज्याउर्ध्वंमौंज्युक्तकालेविद्यामारभ्यते मौंज्यर्थमुक्तः मौंज्युक्तःसचासौकालश्चतस्मिन्विद्यांवेदंआरभेत् मौंज्याऊर्ध्वमित्यनेनमौंज्याःप्रागनधिकारःसूचितः किंकृत्वा गणेशंगिरमपिसरस्वतीमपिविधिवद्विध्युक्तमार्गेणपूजयित्वा कथंभूतेमौंज्युक्तकालेस्थिरचरहरिजित्र्युत्तरब्राम्हहीने स्थिरचरहरिजंस्थिरलग्नंचरलग्नं तिसृणामुत्तराणांसमाहारस्त्र्युत्तरं ब्राम्हं रोहिणी एभिर्हीनेरहितेमौंज्यर्थमेतानिगृहीतानिविद्यारंभेअग्राह्याणीत्यर्थः जाद्यंस्थिरेव्यंगेलग्नेस्फविद्याप्तिः चरेभ्रमइतिश्रवणात् १६

अथकेशांतंमौंजीविमोक्षंचवृत्तार्धेनाह केशांतमिति केशांतंकर्म नृपमितशरदिषोडशेवर्षेचौलवत्स्यादित्यार्याआहुः सर्वंचौलोक्तम त्र्य
स्यमित्यर्थः व्रतोक्तेकालेमौंजीविमोक्षमाहुः स्पष्टं अनयोःकेशांतमौंजीविमोक्षयोःगुरुबलंसुधीभिर्नविलोक्यं अथशूद्राणांमौंज्यभावात्
छूरिकाबंधंवृत्तार्धेनाह शूद्राणांमौंज्यभावात् तदुदिततिथिभेमौंज्युक्तनक्षत्रे अनस्तभौमेज्यशुक्रैः उदितैः भौमगुरुशुक्रैः व्यारेवारे
आरोभौमः तद्रहितवारे लग्नवेनवांशेयत्रकुत्रापिलग्नेभौमनवांशवर्जितइत्यर्थः उपयमविहितेमासिविवाहोक्तमासेविवाहोपयमोसमा-

केशांतंचौलवत्स्यान्नृपमितशरदादित्याहुरार्याव्रतोक्तेकालेमौंजीविमोकंगुरुबलमनयोर्नावलोक्यंसुधीभिः॥



वित्यमरः आरोभौमवारः छूरिकाबंधंकटिप्रदेशेछूरिकाबंधनमाहुः तथाचसंग्रहे शूद्राणांराजपुत्राणांमौंज्याभावेस्त्रबंधनं मौंजीबंधोक्ततिं
थ्यादौकार्यंभौमदिनंविना नारदः छूरिकाबंधनंवक्ष्येनृपाणांप्राक्करग्रहात् विवाहोक्तेषुमासेषुशुक्लपक्षेप्यनस्तगे जीवशुक्रेचभूपुत्रेचंद्रतारा
बलान्विते मौंजीबंधर्क्षतिथिषुकुजवर्जितवासरे तेषांनवांशकेकर्तुरष्टमोदयवर्जिते शुक्लेष्टमेविधौलग्नषडष्टांत्यविवर्जिते धनत्रिकोणकेंद्र

स्येःश्फभैस्त्यायामिगैःपरैश्छूरिकाबंधनंकार्यमर्चयित्वास्फरान्पितॄन् अर्चयेच्छूरिकांसम्यक्देवतानांचसन्निधौ ततःस्फलग्नेबध्नीयात् कस्यांल
क्षणसंयुतां तस्यास्तुलक्षणंवक्ष्येयदुक्तंब्रम्हणापुरा संमितंछूरिकायामंविस्तारेणैवताडयेत् भाजितंगजसंख्येश्च अंगुलान् परिकल्पयेत्
शेषंचैवफलंवक्ष्येध्वजायेधनवान्भवेत् धूमायेमरणंसिंहेजयश्च्वायेतिरोगितः धनलाभोवृषेत्स्यंतंदुःखीभवतिगर्दभे गजायेत्स्यंतसंप्री

शूद्राणांमौंज्यभावात्तदुदिततिथिभेनस्तभौमेज्यशुक्रेव्यारेवारेलवेमास्फपयमविहितेछूरिकाबंधमाहुः॥

॥इतिमुहूर्तमार्तंडेसंस्कारप्रकरणंसमाप्तं॥

तिर्ध्वांक्षेवित्तविनाशनमिति सर्वत्रत्याज्यप्रकरणोक्तंविलोक्यं अस्मिन्प्रकरणेकर्णवेधवृत्तंविनासर्वाणिस्त्रग्धरावृत्तानि २० इतिस्वो
क्तमुहूर्तमार्तंडटीकायां मार्तंडवल्लभायांगर्भाधानादिसंस्कारप्रकरणंसमाप्तं॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथविवाहप्रकरणंविवक्षुस्तावत् घटितगुणविचारंद्वादशभिर्वृत्तैराह अतःपरंअत्रग्रंथेसर्वाणिशार्दूलविक्रीडितानि वरगोत्रकुलादिभिःश्र
द्धांकांतांकमनीयांकन्यांउद्वहेत् चकाराद्वरोपिएवंविधोभाव्यः गोत्रशुध्दिर्ग्रंथांतरात्ज्ञातव्या कुलमपिपंचसप्तनिर्णयमपिएतद्ग्रंथांतरा
ज्ज्ञात्वा अन्यदत्रावलोकयेत् अथयथोत्तरंबलिष्ठं घटितक्रममाह वर्णइति वर्णः १ वश्यं २ भं ३ योनि ४ खेचरा ५ गणः ६ कूटं ७ नाडी ८

श्रद्धांगोत्रकुलादिभिर्गुणयुतांकांतांवरश्चोद्वहेद्वर्णोवश्यभयोनिखेचरगुणाःकूटंचनाडीक्रमात् ॥
वर्णाद्याबलिनोयथोत्तरमहींदूर्ध्वंगुणैक्यंशुभंवर्णाविप्रमुखाझषादिहवरोवर्णोत्तमःस्याच्छुभः ॥ १ ॥

क्रमाद्यथोत्तरंबलिनःस्युः अहींदूर्ध्वंअष्टादशाधिकंगुणैक्यं यथोत्तरंस्याच्छुभं तत्रादौवर्णलक्षणमाह झषात्मीनात्संकाशाद्विप्रमुखाः ब्राम्ह
णादयोवर्णाःपुनर्गणनयाज्ञेयाः तद्यथा मीनोब्राम्हणः मेषःक्षत्रियः वृषोवैश्यः मिथुनःशूद्रः पुनःकर्कोब्राम्हणः सिंहोक्षत्रियइत्यादिइहा-
स्मिन्राशिमेलनेवर्णोत्तमोवरः शुभःस्यात् नान्यथेत्यर्थात्सिद्धं ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथवृत्तार्धेनवश्यमाह नुःनृराशेःमनुष्यराशेः जलजाजलचराभक्ष्याः तस्यैवविहरयःसर्वेवश्याः विगतःहरिःसिंहोयेभ्यः तेविहर यःसिंहरहिताःसर्वेवश्याइत्यर्थः हरेःसिंहस्यविकौर्प्याःवश्याः कौर्प्योवृश्चिकः विगतःकौर्प्योयेभ्यस्तेविकौर्प्याः सिंहस्यवृश्चिकरहिताः सर्वेराशयोवश्याः अथानंतरोक्तस्यहरेःअलिर्वृश्चिकोनशत्रुः वैरीत्यर्थः नुःमनुष्यराशेः अबूजहरयोनेष्टाःस्फः अबूजाःजलजाः हरिःसिंहः एतेनेष्टाः मेलनंनकर्तव्यमित्यर्थः अन्यज्जनात् अन्यत् अस्यभक्ष्यादिकंजनात्ज्ञेयं तद्यथा नुःपुरुषस्यगोर्वश्या

नुर्वश्याजलजावशाविहरयोवश्याविकौर्प्याहरेरस्यालिर्नशत्रुर्मोनुरबूजहरयोनेष्टास्फरन्यज्जनात् ।।
भेगण्यंकल्पतेमिथःरूव्यगशराःशेषंनसत्राश्विभादश्वेभाव्यहिर्मोगिनश्वरकमृडमेषाखुभुक्छुंदुराः २

भवति अत्रपरस्परंमित्रत्वंदृश्यते तस्मादनयोर्मेलनंशत्रुभंस्यात् इदमेवमूंछजातीयवधूवरयोर्नशत्रुभं मूंछानांगोर्भक्ष्यंइत्येवंलोकप्र- चारतोविचारिणीयमित्यर्थः राशिस्वरूपंबृहज्जानकवशादवगंतव्यं बृहज्जातके मत्स्यौघटीनृमिथुनंसगदंसवीणंचापीनरोश्वजघनोम- करोमृगास्यः तौलीससस्यदहनाप्लवगाचकन्याशेषाःस्वनामसदृशाः खचराश्वसर्वे अथभयोनीद्वावपिवृत्तेकेनाह भेगण्येति मिथःप रस्परंवधूवरयोर्भेनक्षत्रेवधूनक्षत्राद्वरनक्षत्रंगण्यं वरनक्षत्रात्कन्यानक्षत्रंगण्यं उभेअपिनवभिर्भाजितेकार्यं शेषंत्र्यगशराःत्रि

सततपंचभवतितदानसत्स्यात् अथयोनिमाह अश्विभादिति अश्विभात्सकाशात्भानांनक्षत्राणां अश्वादयोयोनयोभवंति अश्वोअश्विन्याः इभोभर
ण्याः अविर्मेषः कृत्तिकायाः अहिःसर्पोरोहिण्याः भोगीसर्पोमृगस्य श्वाश्वानःआर्द्रायाः दृकंउंदुरं भक्षनकीतिदृंकभुक् मार्जारः पुनर्वसोःमेषःप्र
सिद्धः पुष्यस्य आखुभक्मार्जारोआश्लेषायाः ध्वंदुरोद्वौउंदुरोमघापूर्वाफल्गुन्योः ॥ २ ॥ गोरुत्तराफल्गुन्याः कालीमहिषीहस्तस्य पशु-
भुक्व्याघ्रश्चित्रायाः महिषीस्वात्याः पशुद्विट्व्याघ्रः विशाखायाः द्वौमृगौअनुराधाज्येष्ठयोः श्वामूलस्य कपिर्वानरोपूर्वाषाढायाः द्वौबभ्रूउत्तरा-

गौःकालीपशुभुङ्महिष्यथपशुद्विट्द्वौमृगौश्वाकपिर्द्वौबभ्रूकपिसिंहवाजिहरिगोनागाःक्रमाद्योनयः ॥
सिंहेभंमहिषाश्वमोतुखनकंश्वैणंचकीशाविगोव्याघ्रंबभ्रुफणीतिभीरुवरयोःप्रेष्येशयोश्चत्यजेत् ॥ ३ ॥

षाढाभिजितोःबभ्रूनकुलौकपिर्वानरः श्रवणस्यसिंहोधनिष्ठायाःवाजीअश्वःशततारायाःहरिःसिंहः पूर्वाभाद्रपदायाः गौःउत्तराभाद्रपदायाःना
गोहस्तीरेवत्याःइतियोनिमभिधाय योनिवैरमाह सिंहश्वइभश्वसिंहेभं सिंहगजंमहिषाश्वं ओतुखनकंमार्जारोंदुरं श्वैणंश्वानमृगौकीशा
विवानरमेषं गोव्याघ्रं बभ्रुफणिंनकुलसर्पं इतिवैरं भीरुवरयोःवधूवरयोः प्रेष्येशयोः प्रेष्यःसेवकः ईशःस्वामीएतयोश्चत्यजेत्वर्जयेत् ॥ ३॥

अथग्रहवैरमाह राशिवैरं विवक्षुस्तावद्राशिनाथानाह क्रियान्मेषाद्यानां राशीनां ईशाः भेशाः एतेक्रमेणस्फुः मं मंगलं मेषस्य शुःशुक्रः वृ
षभस्येत्यादिस्पष्टं रवेःसूर्यस्यईज्यकुजेंदवोमित्राणि ईज्योगुरुःकुजोभौमः इंदुश्चंद्रः एतेमित्राणिशुभदःशनिसितौशत्रू शनिःप्रसिद्धः सितः
शुक्रः एतौशत्रूवैरिणौ अर्थादन्येउदासीनाः विधोर्नौरिपुः विधोश्चंद्रस्यरिपुर्नास्ति सूर्यबुधौमित्रे अन्येसर्वेउदासीनाः कुजस्यभौमस्यवित्

भेशामंशुबुचंरबृशुमगुशाःशोगुःक्रियात्सूरवेर्मित्राणीज्यकुजेंदवःशनिसितौशत्रूविधोर्नौरिपुः॥मित्रे
सूर्यबुधौकुजस्यविदरिःसूर्येंदुजीवाहिताज्ञस्यार्कास्फुजितौहितौवधुरररिसूरेःसितज्ञावरी॥ ५॥ मित्राण्य
र्ककुजेंदवोथभृगुजस्यारीरवींदुहितौमंदज्ञोत्वशनेःकुजेंदुरवयोनेष्टाःसितज्ञौहितौ॥

बुधोअरिःसूर्येंदुजीवाःहिताःमित्राणिअन्येसमौ ज्ञस्यबुधस्य अर्कास्फुजितौरविशुक्रौहितौमित्रे विधुश्चंद्रः अरिःवैरी अन्येसमाः सूरेःगु
रोःसितज्ञौशुक्रबुधौ अरीवैरिणौ अर्ककुजेंदवःरविभौमचंद्राः मित्राणि अन्येसमाः भृगुभुवःभृगोःभवंतीतिभृगुभूः तस्यभृगुभुवःशु
क्रस्यरवींदूसूर्यचंद्रौशत्रू नंदज्ञौशनिबुधौहितौमित्रे अन्येसमाः शनेःकुजेंदुरवयः अरयःसितज्ञौमित्रेअन्येसमाः॥ ७॥ ७॥

अथगणमाह पूर्वास्तिस्रः आर्द्राप्रसिद्धा अंतकोभरणी कः रोहिणी उत्तरास्तिस्रः एवंनक्षत्रनवकंनरिभवति नृगणमित्यर्थः अर्कोहस्तः
अस्त्यंरेवती अदितिःपुनर्वसुः ईज्यःपुष्यः अनिलःस्वाती इंदुर्मृगः श्रुतिःश्रवणः अश्विनीप्रसिद्धा मैत्रंअनुराधा एतन्नक्षत्रनवकंसुरेदेवे
भवति देवगणमित्यर्थः अन्यत् कृत्तिका आश्लेषामघा चित्राविशाखाज्येष्ठा धनिष्ठामूलशततारका एतन्नक्षत्रनवकंअसुरेभवति रक्षो
गणमित्यर्थः दैत्यैर्नृणांमृतिर्भवति देवासुरयोर्देवदैत्ययोःकलिःस्यात् नृसुरयोः नृदेवयोर्मध्यंस्यात् स्वयोर्मेलेसौख्यंस्यात् अथकूटमाह

पूर्वार्द्रांतककोत्तरंनरिसुरेर्कात्यादितीज्यानिलेंदुश्रुत्यश्विनिमित्रमन्यदसुरेदैत्यैर्नृणांस्यान्मृतिः ॥ स्याद्देवासु-
रयोःकलिर्नृसुरयोर्मध्यंस्वयोःसौख्यं नैस्व्यंद्व्यंकेषडष्टकेविपद्द्वेपुत्र्यमर्थांकके शेषेर्थाविविधाविभैक
चरणेभिन्नर्क्षराश्येककंभिन्नांघ्र्येकभमेतयोर्गणखगौनाडीनृदूरंनच ॥ ६ ॥ द्व्यंयके द्विद्वादशेनैस्व्यंनिःस्वस्यभावोनै-
स्व्यंनिर्धनंस्यात् वेपुत्रमर्थांकके अर्थांकके पंचमेनवमेवैपुत्र्यं अनपत्यंस्यात् शेषेउर्वरितेतृतीयैकादशेचतुर्थदशमेउभयसप्तमे एकर्क्षेवि-
विधार्थाः धनपुत्राश्वादयःस्युः कथंभूतेशेषे विभैकचरणेविगतंभैकचरणंनक्षत्रैकचरणंयस्मात्तथातस्मिन्नक्षत्रेचरणेकूटेअनिष्टंफलं
श्रूयते एकराश्योरशुभोद्वाह एकभांशेमृतप्रदइति एकर्क्षस्यचत्वारोभेदाः एकराशिर्भिन्नर्क्षं एकर्क्षंभिन्नराशिः एकराशिनक्षत्रभिन्नचरणं

एकराशिनक्षत्रचरणंचेति चत्वारोभेदः तत्रएकराशिनक्षत्रचरणंनिंदितं विभैकचरणइति अथभकूटेयद्भिन्नर्क्षराश्यैककंराश्यैक
त्वं यच्चभिन्नांघ्र्यैकभंएतयोर्गणखगौनाडीनृदूरंचन अत्रकिमपिनावलोक्यंशुभमित्यर्थः नृदूरंवक्ष्यमाणं भिन्नाघ्र्यैकभमित्यत्र भे
दद्वयमागतंभवति एकर्क्षभिन्नराशिकं अपरंएकराशिनक्षत्रंभिन्नचरणं तस्मात्एकराशिनक्षत्रचरणंत्यक्त्वात्रिषुभेदेषुगणाधि
कंनचिंतयेत् तत्रगणादिदोषेसत्यपिशुभंस्यादित्यर्थः उक्तंचबृहस्पतिना एकराशौपृथक्धिष्ण्येपृथक्राशौतथैकभे गणनाडीनृदूरंच

षट्काष्टेसमभंचषष्ठसहितंचेच्छोभनंस्यात्समंभंद्विर्द्वादशकेद्वितीयसहितंश्रेष्ठंस्त्रियायुग्धरिः

ग्रहवैरंनचिंतयेत् कालनिर्णये दंपत्योरेकनक्षत्रेभिन्नपादेशुभावहं दंपत्योरेकपादेतुवर्षांतेमरणंध्रुवमिति अथग्राह्यषट्काष्टकंद्वि
र्द्वादशंचाह षट्काष्टेसति समभंकर्ककन्यादिचेद्यदिषष्ठसहितस्यात्तदाशोभनंस्यात् ग्राह्यंस्यादित्यर्थः तद्यथा वृषःसमभंतस्मात्सकाशा-
त्षष्ठेनतुलाधरेणसहितंयदिभवतितदाग्राह्यंस्यात्इत्यर्थः ततःस्वामिनोर्मैत्र्यभावात् समभंअष्टमेनसमंनग्राह्यं एवमेवग्राह्याग्राह्यं
विलोकयेत् अथग्राह्यंद्विर्द्वादशंचाह द्विर्द्वादशकेसमभंद्वितीयसहितंयदाभवतितदाश्रेष्ठंशोभनंस्यात् विपरीतंअसत् तत्रसिंहेविशेष

माह स्त्रियायुग्धरिरितिविषमोपिसिंहः स्त्रियाकन्ययायुक्युक्तःश्रेष्ठः अथनाडीमाह मूलेति अत्रश्लोकेतृतीयान्तैस्त्रिभिः पादैस्त्रिस्त्रोना
ड्यः सूचिताः मूलंप्रसिद्धं इंद्रोज्येष्ठाअर्कभंहस्तः पाशीशततारकाअजेकचरणंपूर्वाभाद्रपदा आदित्यंपुनर्वसूः अर्यमाउत्तराफल्गुनीईश
आर्द्रा अश्विभंअश्विनी एभिर्नक्षत्रनवकैरेकनाडीभवति याम्यंभरणी इंदुर्मृगः ईज्यभंपुष्यः मित्रंअनुराधाभाग्यंपूर्वा वसूभंधनिष्ठा
त्वाष्ट्रंचित्रा अंबुपूर्वाषाढा अहिर्बुध्न्यंउत्तराभाद्रपदा एभिर्नक्षत्रनवकैरेकनाडीभवति इहविवाहविषयेयदाएकनाडीनवके द्विभेवधूवरयो
र्भेनक्षत्रेचेत्स्यातांतदामृतिर्मरणंस्यात् अथगौतम्यादिदक्षिणेदेशेक्षत्रियादीनांच अन्यवध्वालाभेगतिमाह गोदादक्षिणतः गो

मूलेंद्रार्कभपाश्यजैकचरणादित्यार्यमेशाश्विभेयाम्येंद्वीज्यभमित्रभाग्यवसूभत्वाष्ट्रांबुहिर्बुध्न्यभैः ॥७॥
अन्यैर्नाड्य इहैकनाडीनवके स्यातांद्विभेचेन्मृतिर्गोदादक्षिणतः क्वचिन्नृपमुखेपार्श्वैकनाडीहिता ॥

दागौतमीतस्याः दक्षिणतःदक्षिणेदेशे सर्ववर्णेनृपमुखेक्षत्रियादौसर्वदेशस्थेक्वचितु अन्यकन्यकायाः अलाभेसति पार्श्वैकनाडीहि
ता शुभास्यान्नमध्यनाडी उक्तंचरत्नकोशे अग्रनाडीव्यधेभर्त्तामध्यनाडीव्यधेद्वयं पृष्ठनाडीव्यधेकन्याम्रियतेनात्रसंशयः
समासन्नेव्यधेशीघ्रंदूरव्यधेचिरेणतु वेधांतरभमानेनवर्षेदुष्टंप्रजायतइति ब्राम्हणविषयम् ज्वरेनिर्धनत्वंच गर्भेमरणमेवच
एष्वेदौर्भाग्यमाप्नोतितस्मात्तांपरिवर्जयेदितिक्षत्रियविषयम् ज्योतिःप्रकाशे निधनंमध्यमंनाड्योर्द्दंपत्योर्नैवपार्श्वयोः नाड्यइतिश्र

स्यव्यवस्थातत्रैवोक्ता॥करग्रहेदुष्टनाड्योननिंद्ये॥इतियद्वचः॥तत्क्षत्रियादिविषयं॥गौतमीयाम्यनतस्तथेति॥अथपूर्वोक्तानांद्विर्द्वादशानांशुभत्वमाह॥मैत्र्ये
ति॥मैत्र्यागृहमैत्र्याद्विव्ययंद्विर्द्वादशंअर्थनंदं पंचमनवमंसत्शुभंस्यात्वश्यादिषड्भिःषड्काष्टकंशुभंस्यात् वश्यभयोनिखेचरनाडीभिः षडष्टकंशुभंस्या
दित्यर्थः॥ अथयदास्त्रीनृगणावरोस्रपगणोरक्षोगणः स्यात्तदातन्मेलनंसत्॥कूटमैत्र्योःसत्योःशुभंस्यात्॥ ८॥ अथयदा॥रक्षस्त्रीरक्षोगणस्त्रीनृ

मैत्र्याद्विव्ययमर्थनंदमपिसत्षड्काष्टकंवश्यतः षड्भिस्त्रीनृगणावरोस्रपगणः सत्कूटमैत्र्योस्तदा॥८॥
रक्षस्त्रीनृपुमान्यदावशसुरैवैः षड्भिर्युतंशोभनंस्त्रीभान्नानिकटेनृदूरमशुभंखेटोडुमैत्र्योःशुभम्॥
व्यर्केतास्रसुवर्णमष्टरिपुकेगोयुग्ममर्थाककेरौप्यंकांस्यमथैकनाडियुजिगोस्वर्णादिदत्वोद्वहेत्॥९॥

पुमान्नृगणःपुरुषःस्यात्॥तदावशसुरैवैःषड्भिःवश्यभयोनिखेचरकूटनाडीखेतैःषड्भिर्युतंतन्मेलनंशुभंस्यात्॥ अथनृदूरंसापवादमाह॥स्त्रीनक्षत्रा
त्॥नाइतिनृनक्षत्रंयदिनिकटेसमीपेभवतितदानृदूरंस्यात्॥कथंभूतंनृदूरंअशुभंअशुभफलदं॥इदंनृदूरंखेटोडुमैत्र्योःसत्योःशुभंस्यात्॥उडुमै
त्रीनक्षत्रमैत्रीयोनिमैत्रीतियावत्॥अथसंकटेदुष्टकूटादौदानमाह॥व्यर्केति॥व्यर्केद्विर्द्वादशेतास्रसुवर्णादिदत्वाउद्वहेत्॥अष्टरिपुकेषडष्टकेगोयुग्मं

गोमिथुनंदत्वाउद्वहेत्॥अर्थांककेपंचमनवमेरौप्यंकांस्यंदत्वोद्वहेत्॥ ॥अथएकनाड्यांदानमाह॥ एकनाडियुजिगोस्वर्णादिदत्वोद्वहेत्॥एकनाडी·
योगेगोस्वर्णान्नवस्त्राणिबहूनिदत्वोद्वहेत्॥राजमार्तंडे॥षडष्टकेगोमिथुनंप्रदद्यात्कांस्यंसरौप्यंनवपंचमेच॥नाड्यांतुधेन्वन्नसुवर्णवस्त्रंद्विर्द्वादशे
ब्राह्मणतर्पणंच॥उद्वाहतत्वे॥ताम्रंहेमधनव्ययेरजतयुक्कांस्यंशरांके वृषंगांदद्याच्चषडष्टकेद्विजभुजिंस्वर्णंचनाडीयुताविति॥१॥ अथगुणवि
चारंत्रिभिर्वृत्तैराह॥वर्णैक्यवरोत्तमेभूरेकोगुणोज्ञेयः॥वर्णयोरैक्यंयस्मिन्घटितेतद्वर्णैक्यं॥वरउत्तमोयस्मिन्तद्वरोत्तमंचउभयत्रापिएकेकोगुणो

भूर्वर्णैक्यवरोत्तमेथवशभक्ष्येर्द्धद्वयंमित्रयोःखंवैराशनकेधरारिवशकेथोसद्वयोरग्नयः॥

ज्ञेयः॥अर्थाद्धीनवरेगुणाभावः॥उक्तंचज्योतिर्निबंधे॥ एकोगुणःसमेवर्णेतथावर्णोत्तमेवरे॥हीनवर्णेगुणःशून्यंकेप्याहुःसदृशोदलमित्यादि॥अथ
वश्यगुणविचारमाह॥वशभक्ष्येअर्धएकस्यार्धगुणः॥वशभक्ष्यंयथामनुष्याणांजलजावशाभक्ष्याश्चतत्रअर्धगुणोग्राह्यः॥एतत्तुद्विजादौज्ञेयम्
द्विजादयस्तुकदाचिच्छ्राद्धेपाठीनजातीयमत्स्यभक्ष्याभवंति॥नसर्वेषां॥तस्माद्वधूवरजातिंविचार्ययोजनीयं॥हीनजातौशून्यम्॥यतःखंवैराश
नकेइत्यस्मिन्नेवश्लोकेउक्तत्वात्॥एवमेवसिंहस्यसर्वेवश्याःभक्ष्याश्चभवंति॥तत्रमनुष्याःवैरभक्ष्यं॥वृश्चिकस्तुवैरी॥अन्यवशभक्ष्यं॥अथ·

मित्रयोः परस्परंसुहृदोः द्वयंगुणद्वयंज्ञेयम्॥ तत्रविचारः॥ स्वजातौमित्रत्वंप्रकटं॥ मनुष्याणांमेषवृषाश्वमृगैः सहमित्रत्वं॥ तत्रहीनजातीयानांपशवो-
वशाभक्ष्यं॥ तत्रार्धगुणः अन्यत्रद्वयम् अथअरिवशकेधराएकोगुणः॥ अरिवश्यकंयथामनुष्याणांवृश्चिकः सिंहवृश्चिकयोर्नित्यंवैरं॥ वृश्चिकदष्टः
सिंहोमरणमाप्नोतीति॥ लोकेप्रसिद्धं॥ तस्मादत्रगुणाभावः॥ प्रथमंवशाभक्षणे अन्यज्जनादित्युक्तं॥ तस्मात्सुबुद्धिभिर्विचार्यवक्तव्यं॥ ममात्रवस्य
विचारणेबुद्धिरेवंस्फुरिता अत्रयद्दुरुक्तंतत्तद्बुधैः शोधनीयं॥ ननुवश्यभक्षणेकोर्प्यनवश्योहरेरित्येवोक्तं॥ त्वयाकथमुक्तं॥ सिंहस्यमनुष्यावै-

मिश्रेतच्छकलंत्वथातिसुहृदोर्वैदास्त्वयोमित्रयोरेकः स्याद्विषतोः स्वभावगुणयोर्द्वैरेवंमहद्वैरिणोः॥ १०

रिभक्ष्यमिति॥ सत्यं॥ तच्छ्लोकोक्तलक्षणंसर्वसामान्यमस्ति॥ अतएवोक्तंग्रंथकर्त्राअन्यज्जनादिति॥ सिंहस्तुनरगजादिप्रतापमारणेत्युक्त-
कः अन्येषांमारणेउदासीनः॥ असदृशत्वात्॥ उक्तंचवैरवश्येगुणाभावोद्वयोः सख्येगुणद्वयं॥ वशावैरेगुणश्चैकोवशाभक्ष्येगुणार्धकमिति॥ अ-
थताराग्रुणविचारमाह॥ सद्वयोः उभयतः सत्तारयोः सतोः अग्नयः त्रयोगुणाः एतदुक्तंभवति॥ भेगण्येहृतेइत्यनेनप्रकारेणउभयतोपियदि-

सत्तारेभवतस्तदात्रयोगुणाइत्यर्थः॥मिश्रेतच्छकलमिति॥मिश्रेएकतःशफ्माताराएकतःअशफ्मा॥एवंविधेमिश्रेसतितच्छकलंतेषांत्रयाणां·
शकलंसार्धैकोगुणइत्यर्थः॥अन्यथागुणाभावइत्यर्थात्सिद्धं॥उक्तंच॥एकतोलभ्यतेताराशफ्माच्चैवाशफ्मान्यतः॥तदासार्धेगुणश्चैकस्ताराशफ्
द्वौमिथस्त्रयः॥उभयोर्नशफ्मानारातदाशून्यंसमादिशेत्॥अथयोनिगुणविचारमाह॥अतिसुहृदोवेदाश्चत्वारोगुणाः॥मित्रयोस्त्रयः॥द्विषतो
वैरिणोरेकः॥स्वभावगुणयोर्द्वौ॥महद्वैरिणोःस्वंशून्यंगुणःस्यात्॥एवंपंचप्रकारेणयोनिगुणाः॥अस्यविवेकः॥अष्टाविंशतिनक्षत्राणांअश्वादय
सर्वाश्चतुर्दशयोनयः॥तत्रसिंहेभंमहिषाश्वमित्यादियदुक्तंतन्महद्वैरं॥तत्रापिमहद्वैरेमहिषाश्ववानरमेषकं एतद्द्वयंउदासीनंस्वभावगुणंपरस्पर·
घाताभावात्॥अथैकयोनिषुअतिमित्रत्वंज्ञेयम्॥एकयोनिषपिगजयोःश्वानयोःमार्जारयोर्व्याघ्रयोःसिंहयोःएकयोनित्वेपिनमित्रत्वं॥परस्पर
कलहकारणात्॥एतद्युग्मपंचकंस्वभावगुणम्॥एतद्युग्मपंचकंउत्तममहद्वैरस्थं॥महिषाश्वंवानरमेषंएतद्द्वयमित्येतद्युग्मसप्तकंस्वभावगुणं॥व्या
घ्रस्तुसर्पोंदुरनकुलेषुउदासीनः॥सिंहोप्येवमेवउदासीनः॥तथाएतौव्याघ्रसिंहौअन्येषांवैरिणौ॥सर्पमार्जारयोर्वैरं॥श्वमेषयोर्मैत्रं॥गोमहिष्योर्मै
त्रंहि॥उंदुरसर्पयोर्वैरं॥एवंशत्रुमित्रादिकंउदासीनत्वंचविचार्यउक्तवत्गुणाज्ञातव्याः॥औदासिन्येस्वभावगुणवद्गुणग्रहणं॥उदासीनानांगुणा·
यद्यपिनोक्तास्तथापिस्वभावगुणेमहिषाश्वेमेषवानरेचऔदासिन्यंदृश्यते॥तस्मादेतद्द्वयंउदासीनेगुणग्रहणंकर्तव्यमित्यर्थात्ज्ञायते॥उक्तंच॥
महावैरेचवैरेचस्वभावेचयथाक्रमं॥मैत्रेचैवातिमैत्रेचखवेदुद्वित्रिचतुर्गुणाइति॥१०॥ छ छ छ छ

मु॰मा॰

अथखेचरगुणमाह एकः ईशोयस्मिन्तदेकेशं उभयत्रमित्रेयस्मिन्तदुभयमित्रं। एकेशंचउभयमित्रंचएकेशोभयमित्रे तयोःशरमिताःपंच गुणाग्राह्याः उभयमित्रापिपंचपंचग्राह्याइत्यर्थः अर्धसमारातिके समःउदासीनः अरातिःशत्रुः एवंयस्मिन्मेलेनतत्समारातिकम्तत्र अर्धं एकस्यार्धगुणः एवंसमत्रिकेचत्वारोगुणाःस्युः रिपुहितेअरिस्फुद्धदिभूमिरेकः ध्रुदासेत्रयः द्वौउदासीनौयस्मिन्तत्रत्रयोगुणाः अनुक्तेगु- णाभावः उक्तंच यत्रैकाधिपतित्वेचमित्रत्वेगुणपंचकम् चत्वारःसममित्रेचद्वयोःसाम्येत्रयोगुणाः मित्रवैरेगुणश्चैकःसमवैरेगुणार्धकम्

एकेशोभयमित्रयोःशरमिताअर्धसमारातिकेचत्वारःसममित्रकेरिपुहितेभूमिर्ध्रुदासेत्रयः॥
नादेवोमनुजावधूरिहरसास्तद्वैपरीत्येशराःषट्साम्येस्त्रपपूरुषःस्फुरवधूरत्रैककोन्यत्रखं॥११॥

परस्परंखेटवैरेगुणः शून्यंसमादिशेदिति अथगुणविचारमाह नादेवइति यत्रनानरोदेवगणः वधूर्मनुजामनुष्यगणाभवति इहरसाःषड्गु णाग्राह्याः तद्वैपरीत्येतयोर्वैपरीत्यंतद्वैपरीत्यंतस्मिन्शरमिताः पंचगुणाग्राह्याः एतदुक्तंभवतियत्रनरोदेवगणः वधूर्मनुष्यगणाअत्रपंचगु णाग्राह्याइत्यर्थः षट्साम्येगुणसाम्ये षड्गुणाग्राह्याः यत्रअस्त्रपपूरुषः दैत्यगणःपुरुषःस्फुरवधूः देवगणास्त्रीभवति अत्रैकः एकगु- णोग्राह्यः अन्यच्च उक्तादन्यत्रखंशून्यंस्यात् ॥ ११ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

मु॰मा॰

अथकूटेगुणविचारमाह अनुक्तेगुणाभावः दुःकूटेद्विर्द्वदशादौसतियद्यियोनिमैत्रं अबलादूरंस्त्रीदूरस्यात् तदांभोधयश्चत्वारोगुणाग्राह्याः नोचेद्यद्यियोनिमैत्रमबलादूरंनस्यात्तदाखंशून्यंगुणःस्यात् अनयोर्योनिमैत्रस्त्रीदूरयोर्मध्येयत्रएकंस्यात् इहभूरेकोगुणः भांघ्र्येक्यकेनक्षत्रैक्ये चरणेखंशून्यंगुणाग्राह्याः अथसत्कूटेसति यदिवरदूरताभरिपुताउभयोर्वैरंयोनिवैरंचस्यात् तदारसाःषट्गुणाग्राह्याः भिन्नराश्येकभेपं चभिन्नराशिश्चएकभताच अत्रपंचगुणाग्राह्याः उर्वरितेसत्कूटेगिरयःसप्तगुणाग्राह्याः अथनाडीविचारमाह अथोनाडीति नाडिभेदेगजा

दुःकूटेयद्यियोनिमैत्रमबलादूरंतदांभोधयोनोचेत्खंत्वनयोर्यदैकमिहभूर्भांघ्र्येक्यकेखंगुणाः॥ सत्कूटेवरदूरता
भरिपुताषड्भिन्नराश्यैकभेपंचान्यत्रसत्कूटकेचगिरयोथोनाडिभेदेगजाः॥१२॥ स्त्रीणामष्टमवर्षतस्त्रिषुनृणां
तीर्णव्रतानामयुक्स्वब्देधत्रचराधमाघयुगयोर्मार्गेविवाहःशुभः॥

अष्टौगुणाग्राह्याः अनुक्तेगुणाभावः इतिमुहूर्तमार्तंडेघटितं १२ अथस्त्रियोविवाहकालमाह स्त्रीणामष्टमवर्षतःसकाशात्त्रिषुवर्षेषुविवाहःशु भःस्यात् अष्टमनवमदशमेषुशुभःस्यादित्यर्थः तथाचसंवर्तः अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणी दशवर्षाभवेत्कन्याद्वादशेवृषलीमता गौरीदानान्नाकलोकेवैकुंठेरोहिणींददत् कन्यादानाद्ब्रह्मलोकेरौरवंतुरजस्वलेति रजस्वलेतिवृषलीपर्यायः तथाचकारिकायामुक्तं षडब्दमध्ये॰

नोद्वाह्याकन्यावर्षद्वययंतः सोमोभुंक्ते ततस्तद्वद्गंधर्वश्च तथानलइति अस्यवाक्यस्यसहायिनीश्रुतिरपि सोमःप्रथमोविविदइत्युपक्रम्य सोमोद
दद्गंधर्वायगंधर्वोददग्नयेइत्यंता नन्वस्यविरोधोब्रह्मपुराणेगौतमीमाहात्म्येभानुतीर्थवर्णनेविष्टिभानुसंवादेदृश्यते विष्टिभानुरुवाच चतुर्था
द्वत्सराद्दूर्ध्वंयावन्नदशमात्ययः तावद्विवाहः कन्यायाःपित्राकार्यःप्रयत्नतइति सत्यं अत्रपुराणवाक्यंशूद्रादिविषयं श्रौतस्मार्तब्राह्मणादि
विषयं इत्यविरोधः सप्तमवर्षंविषमत्वान्नारदादिभिः स्त्रीविवाहेनांगीकृतं तस्मात्सर्ववर्णानामविरुद्धमेवोक्तं स्त्रीणामष्टमवर्षतस्त्रिवर्षितिक-

॥ज्येष्ठंपूर्वजयोस्त्यजेद्धिमरुचिंझेज्योनखेटान्वितंयन्मासादिजनुर्भवंप्रथमकेगर्भेत्यजेन्नानुजे ॥ १३॥

थितकालादूर्ध्वंकदाचिद्वरलाभनिमित्तादोसमवर्षेषुद्वादशचतुर्दशषोडशेषुविवाहोग्रंथांतरेउक्तः कालनिर्णयदीपिकाविवरणेस्वयंवरार्थंकाल
द्वयमुक्तं जीवत्पितृकायाऋतौवर्षत्रयानंतरंस्वयंवरकालंअदातृकायाअपि अथपुंसांविवाहकालमाह नृणांतीर्थव्रतानांकृतविसर्गाणांअयुक्
स्वेषुविषमेषुअब्देषुवर्षेषुविवाहःशुभःस्यात् विशेषउक्तवर्षेषुकर्तव्यइत्याह अत्रराधमाघयुगयोःअत्रविषमवर्षेषु राधोवैशाखःमाघःप्र
सिद्धः अनयोर्युगेयुगुलेराधयुगं वैशाखज्येष्ठौमाघफाल्गुनावित्यर्थः मार्गेमार्गशीर्षेविवाहःशुभःस्यात् एतेपंचमासाःबहुसंमताः एषुज्ये

ष्ठंज्येष्ठमासं पूर्वजयोः प्रथमजातयोः द्वयोस्त्यजेत् अथदिकृतरेज्येष्ठेसतिनत्यजेत् दोषांतरमाह हिमरुचिंचंद्रंज्ञोज्योनरवेदान्वितम् बुधगुरु रहितान्यग्रहयुक्तं शुक्राणांअन्यतमयुक्तंत्यजेत् अनिष्टफलश्रवणात् मासाद्यंजनिसंभवमिति त्याज्यप्रकरणोक्तंयत्तस्यविशेषनिर्णयमाह यन्मासादिति स्पष्टार्थ १३ अथविवाहनक्षत्राण्याह मूलांत्यार्केति मूलंप्रसिद्धं अंत्यंरेवती अर्कोहस्तः मघाप्रसिद्धा ध्रुवाणिरोहिण्युत्तरात्रयः इंदुर्मृगः अनिलंस्वाती एभिःसहितंमैत्रंअनुराधाविवाहेशुभं शुभंफलं अथएतेषूक्तेषुनिंद्यमाह पापत्यक्तंअसत् अनिंदुभुक्तं चंद्राभु

मूलांत्यार्कमघास्थिरेंदूनिलयुग्मैत्रंविवाहेशुभंपापत्यक्तमनिंदुभुक्खलयुतंभोग्यंचविद्धंनभं॥ विश्वे
द्वोर्यममित्रयोर्द्विकभयोःपैत्र्यर्क्षहर्योर्मिथोंत्यार्यम्णोःपुनरस्त्रपोर्वरुणभस्वात्योरुभाहस्तयोः॥ १४॥

क्तंनशुभं एतदुक्तंभवति पापग्रहत्यक्तंनक्षत्रंचंद्रभुक्तिरहितंनशुभंस्यात् अथवेधमाह विश्वेद्वोः उत्तराभृगयोः यममित्रयोः भरण्यनु राधयोः द्विकभयोःकृत्यभेकभे द्वेद्विकभेरोहिण्यभिजितौतयोः पैत्रर्क्षहर्योः मघाश्रवणयोः मिथःपरस्परं अत्यार्यम्णोःरेवत्युत्तराफाल्गु न्योः पुनरस्त्रपोः पुनर्वसुमूलयोः वरुणभस्वात्योः उभाहस्तयोः उत्तराभाद्रपदाहस्तयोः मिथःपरस्परंवेधःस्यात् इत्युत्तरश्लोकेनान्वयः
॥ १५ ॥श्रीगजाननप्रसन्नोस्तु॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथकर्मविशेषेणवेधनिर्णयमाह वेधोयमिति अयंवेधः करपीडनेविवाहेपूर्वंमुनिभिर्निगदितः नान्येषुअन्येषुकर्मस्रुवेधोनोक्त इत्यर्थः तेषुवि
वाहान्यकर्मस्र सप्तशलाककेस्मृतः किंभूतेसप्तशलाककेचक्रे शिवदिशः ईशान्याः सकाशात्कृशानवार्घैर्युते कृशानुः देवतायस्येतिकार्शानवं
कृत्तिकासाआद्यायेषांनानितैर्युतेईशान्यादिप्रदक्षिणंकृत्तिकादिनक्षत्रयुक्तमित्यर्थः विवाहादृतेसर्वकर्मस्रुसप्तशलाकाचक्रेवेधोवलोकनीयइ

वेधोयंकरपीडनेनिगदितोनान्येषुतेषुस्मृतोवेधः सप्तशलाककेशिवदिशःकार्शानवाद्यैर्युते ॥ वेधोंत्यादिमयो
र्द्विकत्रिमितयोरंघ्र्योर्मिथः सद्ग्रहेर्विद्धे भेचरणंत्यजेत्खल ॰ गैः सर्वंत्विहांघ्रिंक्कचित् ॥ १५ ॥

ति अथपादवेधमाह वेधोंत्यादिमयोरिति अंत्यादिमयोःचतुर्थप्रथमयोः द्वितीयतृतीययोः अंघ्र्योश्चरणयोः मिथःपरस्परंवेधःस्यात् अ
थास्यनिर्णयमाह सत्खगैः शुभग्रहैः भेनक्षत्रेविद्धेसतिचरणंत्यजेत् खलखगैः पापग्रहैः विद्धेसतिसर्वनक्षत्रंत्यजेदित्यर्थः इहास्मिन्पापवि
द्धेक्कचिदन्यमुहूर्तालाभेसति अंघ्रिंचरणंविद्धंत्यजेदित्यर्थः ॥१५॥ ७ ॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥

अथवेधभंगमाह लग्नेशेइति लग्नस्वामिभवर्गेएकादशगेसति वेधस्यदोषोनास्तीति एकोभंगः अथवाशशिनिसतदृष्टेसतिद्वितीयोभंगः
वाइत्यथवाशुभेशुभग्रहेचंद्रवर्जितेअंगेसति तृतीयोभंगः शुभस्यहोरायांचेतिचतुर्थोभंगः एषामन्यतमेसतिव्यधोनास्तीतिपूर्वेमुनयोजगुः
आहुः तथाचवसिष्ठः लग्नेशुभःसौम्ययुतेक्षितोवालग्नादिनाथोभवगस्तथावा कालाख्यहोराचतथाशुभस्यभवेद्विदोषस्यतथाविभंगःइति
उद्वाहतत्वेपि सप्तकक्षदृक्तनुगेशुभेव्यधभयंनीवाप्यलग्नेग्ययेहोरायांचशुभस्यवाशशिनिसतदृष्टेपिचार्येरुडोःइति अथलत्तामाह भौमादि

लग्नेशेभवगेथवाशशिनिसदृष्टेशुभेवांगगेहोरायांचशुभस्यवाव्यधभयंनास्तीतिपूर्वेजगुः॥ भौमा
त्र्याकृतिषट्जिनाष्टनखभंहन्त्यग्रतोलत्तयाखेटोर्कोर्कमितंशशीमुनिमितंपूर्णोनसन्मागधे॥ १६॥

ति भौमात्सकाशात्खेटोग्रहोराहन्तः क्रमात्त्र्याकृत्यादिभंनक्षत्रंअग्रतोलत्तयाहंति भौमस्तृतीयं बुधःआकृतिर्द्वाविंशमितं गुरुःषष्ठं शु
क्रःजिनमितेचतुर्विंशं शनिरष्टमम् राहुर्नखमितंविंशंलत्तयाहंति अर्कःसूर्यः अर्कमितंद्वादशं शशीपूर्णचंद्रमाः मुनिमितंसप्तमं अग्रतो
लत्तयाहंति तन्हतंनक्षत्रंमालवेमालवदेशेनसत् नशुभस्यात् उक्तंच लत्तामालवकेदेशेपातंकौशलकेतथा एकार्गलंतुकाश्मीरेवेधंसर्व
त्रवर्जयेत् ॥ १६॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ । ॥

अथदोषांतरमाह षण्मासंषण्मासपर्यंतंग्रहणोडुग्रहणनक्षत्रंचंद्रतनुगंचंद्रगतंलग्नगतंचत्याज्यं चंद्रगतमितियस्मिन्दिनेचंद्रमसायुक्तंभवतित
चंद्रगतंदिननक्षत्रमितियावत् तनुगंयथा अश्विन्यांग्रहणेजातेसत्यंशत्रयोदशभागांतमेषलग्नेसति अश्विनीलग्नस्थास्यात् एवंभरण्या-
द्यपिग्रहणोडुइत्यनेनैवअन्यान्यपिऊडूनिदुष्टानित्याज्यानिविद्धर्क्षंविद्धनक्षत्रंजन्मनक्षत्रंएतेउभेतनुगेत्याज्ये भंचलग्नंचभलग्नेजन्मनिभलग्ने
जन्मभलग्नेतएवजन्मभलग्नकेजन्मराशिजन्मलग्नेतनुगेत्याज्ये लग्नांतर्गतनक्षत्रज्ञानायस्वकल्पितसूत्रं नवघ्नंतनुवेदाप्तंसैकंस्यात्तारकंत

षण्मासंग्रहणोडुचंद्रतनुगंविद्धर्क्षजन्मर्क्षकेत्याज्येजन्मभलग्नकेतनुगतेसूर्यान्मनूडुत्यजेत् ॥ दंतव्यंक-
दशोर्कनोयुगगजास्तर्काःखबाणेदवोनाडीःसंक्रमणेत्यजेद्दिवसदांप्रायोरवेर्दूषिताः ॥ १७ ॥

नौ अर्कनक्षत्रात्सूर्यनक्षत्रान्मनुडुचतुर्दशनक्षत्रंत्यजेत् अथसूर्यादीनांराशिसंक्रमणेत्याज्यघटिकाआह त्याज्यइति रविचंद्रकुजसौम्यगुरु
शुक्रमंदानांसंक्रमणेरदव्यंकदङ नाड्यस्त्याज्याः तद्यथा रविसंक्रमणेरदनाड्योद्वात्रिंशत्घटिकावर्ज्याः संक्रमणकालात्पूर्वतः षोडशघटिकाः
परतःषोडशघटिकाः एवंद्वात्रिंशद्घटिकास्त्याज्याइत्यर्थः तथाच संक्रमणेद्वेनाड्यौभौमसंक्रमणेद्वेनाड्यौभौमसंक्रमणेनवघटिकाःबुधसंक्रमणे
द्वेघटिकेत्याज्येगुरोःसंक्रमणेअष्टाशीतिचतुरंशीतिघटिकाः शनेःसंक्रमणेखतियः१५० पंचाशदधिकशतघटिकाःशुक्रस्यषड्नाडिकास्त्याज्याइत्यर्थः१७

मु॰मा॰
३५

अथसंधिदोषमाह ऋतुसंधितःवसंतादिऋतुप्रवृत्तेःषट्षष्टीषड्भिरधिकाषष्टिः ६६घटीनांषट्षष्टीत्याज्येत्यर्थः सतुप्रवृत्तिलक्षणंरत्नमालायां ॥ मृगादिराशिद्वयभानुभोगःषट्चर्तवस्युःशिशिरोवसंतः ग्रीष्मश्चवर्षाचशरच्चतद्वद्हेमंतनामाकथितोत्रषष्ठइति तिथिभयुक्संधौतिथिनक्षत्र योगानांसंधौद्विनाड्योपृथक्द्वेद्वेघटिकेत्याज्ये अथपूर्वमुक्तंग्रहजनिप्रातोद्भवंसूतकमिति तत्रग्रहणसूतकेलक्षणमाह ग्रहादिति ग्रहात्ग्रह णतःसकाशात् उपरितत्पादैस्तच्चरणैःग्रहपादैःत्रिवेदषड्भिान् ३।४।६।८ दिवसान्त्यजेत् एतदुक्तंभवति पादैकमात्रग्रहणेत्रीन्दिवसान्त्य

॥ षट्षष्टीऋतुसंधितस्तिथिभयुक्संधौद्विनाड्योग्रहान्तत्पादैर्दिवसांस्त्रिवेदषड्भिान्प्रागर्द्धितान्संत्यजेत् ॥

जेत् अर्धग्रहणेचतुरोदिवसान्त्यजेत् त्रिपादेग्रहणेषट्दिवसान्त्यजेत् सर्वग्रहणेअष्टदिवसान्त्यजेत् प्राग्ग्रहणात् प्राक्प्रथमतःअर्धितान् त्रिवेदादीन्दिवसान्त्यजेत् एतदुक्तंभवति पादग्रहणेत्रयाणामर्धं तद्यथा पादग्रहणेग्रहणात्पूर्वंसार्धैकदिवसं १ नवतिघटिकास्त्याज्याः अर्ध ग्रहणेचतुर्णामर्धंद्वौदिवसौपादत्रयग्रहणेषण्णामर्धंत्रीन् सर्वग्रहणेअष्टनामतदर्धंचतुरोदिवसान्ग्रहणात्पूर्वंत्यजेत् उपरागेग्रहोराहुग्रस्तेत्विं दौचपूष्णिचेत्यमरः शार्ङ्गीयविवाहपटले सर्वग्रासेदिनान्यष्टौशुभकार्येषुवर्जयेत् त्रिभागोनेषट्दिवसानर्धग्रासेचतुर्दिनम् चतुर्थांशे

टी॰

३५

त्रिरात्रंतुग्रहणेचंद्रसूर्ययोरिति अत्राप्यंतरालेतुपातोज्ञेयः तथाचार्षिषेणः ग्रहणात्रिदिनंपूर्वंपरतोदिनसप्तकमिति सर्वग्रहणविषयम्
ज्योतिःप्रकाशेपि खग्रासेसर्वपादोनखंडाग्रस्येतुवासराः गजाश्वेषड्भिरामाब्जानेष्टास्फः प्राग्दलेग्रहेइति अथोत्पातेवर्ज्यकालमाह उत्पाते
त्र्यहमिति उत्पातेभूकंपनिर्घातमहोल्कानिपातादिकेअन्यहं अद्रिमितानांअन्हांसमाहारः अन्यहंसप्ताहमित्यर्थः उत्पातेजातेसतिसप्ताहंशु
भकर्मणित्यजेदित्यर्थः दोषांतरमाह उद्गमंचशिखिनः शिखिनःकेतोः उद्गमंउदयंत्यजेत् यावत्केतूदयस्तावत्मंगलंनकुर्यादित्यर्थः तथाचार्षि

उत्पातेत्र्यहमुद्गमंचशिखिनोराकाष्टमीप्राग्दलेविद्धंप्रांत्यकृतरुद्रयोरबहुलेकृष्णेनिरेकेविह ॥ १८ ॥

षेणः परंसप्ताहमुत्पातेत्यजेत्केतूदयंशुभमिति भद्राकालमाह राकाष्टमीप्राग्दलेविद्धंस्यात् राकापौर्णिमा अष्टमीप्रसिद्धा अनयोस्तिथ्योः प्राग्द
लेपूर्वार्धेविद्धंविष्टिस्यात् कृतरुद्रयोः प्रांत्येकृतंचतुर्थीरुद्रएकादशी अनयोः प्रांत्येविद्धंस्यात् एतद्भद्राचतुष्टयंअबहुलेशुक्लपक्षेस्यात् कृष्णेनि
रेकेविह उक्तेषुतिथिषुनिरेकेषुएकरहितेषुकृष्णेकृष्णपक्षेविद्धंस्यात् भद्रापवादः शार्ङ्गीयविवाहपटलेदूषितः ॥ १८ ॥ ७ ॥ ७ ॥

अथगंडांतलक्षणमाह सार्पंआश्लेषा इंद्रोज्येष्ठा अंतिमभंरेवती एषामंतः तस्मात्कालात्प्राक्परंपूर्वापरतः अब्धिघटिकंगंडांतिकंस्यात् अब्धय
श्चतस्रोघटिकायस्मिन्नित्यब्धिघटिकं चतुर्घटिकमित्यर्थः एतदुक्तंभवति उक्तनक्षत्रांतात्पूर्वतोघटिकाद्वयंपरतोघटिकाद्वयं एवंघटिकाचतुष्ट-
यंनक्षत्रगंडांतं अथतिथिगंडांतमाह पूर्णांततोब्ध्यर्धकं पूर्णापंचमीदशमीपूर्णिमातासामंतः अब्ध्यर्धकंघटिकंगंडांतंपूर्वापरतःस्यात् अथलग्नगं
डांतमाह कीटांत्यालिविरामतःकुघटिकं कीटःकर्कटकः अंत्योमीनः अलिर्वृश्चिकः एषांविरामोअवसानं तस्मात्कुघटिकं प्रागर्धघटिकापरतोर्धघटि

सार्पेंद्रांतिमभांततोब्धिघटिकंपूर्णांततोब्ध्यर्धकंकीटांत्यालिविरामतःकुघटिकंगंडांतमूर्ध्वाधरं॥ सावैशूल्यहगाख्य
योगविरतौभंतत्रचंडायुधंदुर्योगेदिनभाच्चसाभिजिदयुक्भेर्कस्तदैकार्गलः॥१९॥

का एवमेकघटिकंलग्नगंडांतंस्यात् अथचं
डायुधमाह सावैति सासाध्ययोगः वैवैधृतिः शूःशूलः व्यव्यतीपातः हहर्षणः गंगंडः एतदाख्ययोगानांविरतिरवसानं तत्रयद्भंनक्षत्रंतस्माच्चंडायुधंस्या
त् चंडप्रचंडंमहत् एवंविधमायुधंस्यात् आयुधंघातकंस्यात् तस्मात्तत्नक्षत्रंवर्ज्यमित्यर्थः अथैकार्गलमाह दुर्योगेदिनभादिति विष्कंभातिगंडस्थू
लगंडव्याघातवज्रव्यतीपातपरिघवैधृतयोनवदुर्योगाः एषामन्यतमेसतिदिनभादिदिननक्षत्रादि साभिजिदयुग्मेअभिजासह अयुग्भेविषमनक्षत्रेय
दार्कःसूर्योभवति तदाएकार्गलःस्यात् एकार्गलाशुभावरोधनीयस्मिन्नित्येकार्गलः शुभफलावरोधकमित्यर्थः ॥१९॥ ७ ॥ ७ ॥

अथवारदोषमाह सूर्यात्सकाशाद्वारेषुक्रमेणनिगमादिकंयामदलंयामार्धकमुझ्झंतित्यजंतिमुनयइतिशेषः युगमितंरवौ सप्तमितंसोमे अश्विनौ
द्वौतन्मितंभौमे इषुमितंबुधे नागाष्टौतन्मितंगुरौ त्रिमितंशुक्रे षट्मितंशनौ एतद्यामदलंदिवैवउझ्झंतिनरात्रौ अथकुलिकादीनाह इनादोसू-
र्यादौवारेदिवाइंद्रादिकंषोडशांशंदिनमानस्यशोडशांशोग्नात्यः तेनगण्यास्तेषोडशांशाग्नात्याइत्यर्थः तंकुलिकमुझ्झंति अपरेतिथ्यंशंपंचदशांशं
कुलिकमुझ्झंति तन्निशितद्रात्रौतैरेवव्येकरहितंइंद्रादिकंषोडशांशंपंचदशांशंमुझ्झंति तद्यथा रवौदिवा इंद्रमितंचतुर्दशं तद्रात्रौत्रयोदशं सोमे

सूर्याद्यामदलंदिवैवनिगमाब्धरवीषुनागात्रिषट्संख्याकंकुलिकंदिवेंद्ररविदिङ्नागर्तुवेदद्विकं ॥ व्येकंतन्नि
शिषोडशांशमपरेतिथ्यंशमुझ्झंतितैःकालकटकमैनिघंटमपरेज्यज्ञास्फुजिद्भ्यःक्रमात् ॥ २० ॥ ७ ॥

दिवाद्वादशं तद्रात्रौएकादशमित्यादि अथतैरेव इंद्रादिभिर्मुहूर्तैः अमरेज्यज्ञास्फुजिद्भ्यःसकाशात्क्रमात्कालंकंटकं ऐनिघंटं इनस्यापत्यंपुमानैनि
र्यमः तस्यघंटोयमघंटइत्यर्थः तमुझ्झंति एतदुक्तंभवति अमरेज्योगुरुः तस्मात्सकाशात्तैरेव इंद्रादिभिर्मुहूर्तैः कालमुझ्झंति ज्ञात्बुधात्तैरेवें
द्रादिभिःकटकंआस्फुजिच्छुक्रः तस्मात्सकाशात् तैरेवेंद्रादिभिःमुहूर्तैःऐनिघंटंयमघंटकमुझ्झंति ॥ २० ॥ ७ ॥ ७ ॥

अथमुहूर्तानाह शक्रः प्रसिद्धः इंदुश्चंद्रः ईज्योगुरुः यमःशनिः एषुक्रमेणगोंकरविभूतुल्यामुहूर्तादिवादुष्टास्युः दुमुहूर्ताइत्यर्थः कुजनिशिअ गसमसोमुहूर्तोदुर्मुहूर्तः ग्रंथांतरे अर्यम्णोर्कतुहिनकिरणेराक्षसब्राह्म्य संज्ञावित्यादिबहवोदुमुहूर्ताउक्ताः अत्रस्वल्पाउक्तास्तेषांपरिहारमाह॥ यइतरेमुहूर्ताग्रंथांतरेपठितास्तेसर्वेअर्धयामादिषुसंति अतोत्रमयानोक्ताः अतःअर्धयामादीनांत्यागेतेपित्यक्ताःस्युः किंग्रंथविस्तरेणेतिभावः॥ एतत्तुसूज्ञाज्ञास्यंति यथारवौचतुर्दशोमुहूर्तोदुर्मुहूर्तः कुलिकोपिचतुर्दशोमुहूर्तः तयोरेकत्रसद्भावइत्यन्येतिविचारगम्याः नन्वेवंचेत्तर्हिपूर्वे

शक्रेंदीज्ययमेषुगोंकरविभूतुल्यामुहूर्तादिवादुष्टास्युःकुजनिःश्यगोयइतरेसंत्यर्धयामादिषु॥ प्रेक्ष्यः
संप्रतिवृद्धितूर्यचरणेब्रम्हद्वितीयेपमःसूर्याद्या अनुविश्वपाशियमलेंद्वन्त्यर्कभैर्मृत्युदाः ॥ २१ ॥

व्यर्थपठितं भेवलैस्त्वनधिकाधिकदोषविवक्षयोक्तमितिनदोषः अथपातसंभवकालमाह प्रेक्ष्यइतिसंप्रतिसांप्रतं वृद्धितूर्यचरणे वृद्धियोगस्य चतुर्थचरणे तथा ब्रम्हद्वितीये ब्रम्हयोगस्यद्वितीयचरणे अपमःक्रांतिःपातोविलोक्यः ब्रम्हसिद्धांताद्युक्तप्रकारेणविलोक्यइत्यर्थः अथमृत्यं सर्वत्रवर्जयेदित्युक्तत्वात् मृत्युयोगमाह अर्काद्याइति अर्काद्याःसूर्यादयः क्रमेणअन्वादिभिर्नक्षत्रैःसहमृत्युदास्युः अनुराधा विश्वेउत्तराषाढा पाशीशततारका यमलोअश्विनीइंदुमृगः अहिराश्लेषाअर्कभंहस्तः एतदुक्तंभवति अर्कःअनुराधयासहयुक्तोमृत्युदः सोमउत्तराषाढयाभौमः॥

शततारकयाबुधःअश्विन्यागुरुर्मृगेणशुक्रः आश्लेषयाशनिर्हस्तेनसहितोमृत्युदः स्यादित्यर्थः ॥ २१ ॥ अथविषघटिकाआह पंचाशदिति अश्वि
तःसकाशात्नक्षत्रेषुइमाभ्यः पंचाशज्जिनेत्यादिभ्योघटिकाभ्योअग्रेपरतोअब्धिनाड्यश्चतुर्नाड्योविषंस्यात् एतदुक्तंभवति अश्विन्याःपंचाशत्घ
टिकाभ्योनंतरं चतुर्नाड्योविषं एवमन्यत् अत्राकन्यासएवव्याख्यानं ॥ २२ ॥ अथैषांध्रुवकानांस्पष्टीकरणमाह नक्षत्रस्येति नक्ष-

पंचाश ५० ज्जिन २४ खाग्नयः ३० श्वखकृता ४० आखंडला १४ मूर्छना २१ स्त्रिंश ३० द्विंश २० रदाः ३२ ख-
राम ३० नख २० धृत्ये १८ काश्विनो २१ विंशतिः ॥ २० ॥ शक्रे १४ द्रौ १४ दश १० वासवा १४ रसशरा ५६ सिद्धा २४
नखा २० शा १० दिशो १० धृत्य १८ ष्टौ १६ जिन २४ खाग्नयो ३० श्वितइमाभ्योग्रेब्धि ४ नाड्योविषं ॥ २२ ॥ न
क्षत्रस्यगतैष्ययोगगुणितःस्वस्वध्रुवःषष्टि ६० हृत्स्पष्टस्यादतउर्ध्वमब्धिघटिकाःस्पष्टाःस्युरेवंकृताः ॥ चंद्रःसौ
म्यभगोथवाशुभस्तृत्दृष्टोथवास्वाशगःकोणा ५।९स्ता ७ऽत्र १०सुखे ४ पुवाविषभयंहंतीहसार्गेःगपः ॥ २३ ॥

त्रस्यगतैष्ययोगेनगुणितः स्वस्वध्रुवःषष्टिहृत्स्पष्टःस्यात् अतउर्ध्वंस्पष्टध्रुवानंतरंअब्धिघटिकाश्चतुर्नाड्यःविषं स्यात् एतदुक्तप्रकारेणकृताः
संत्यः स्पष्टाःस्युः एतदुक्तंभवति ध्रुववच्चतुर्नाड्योपिनक्षत्रगतैष्ययोगगुणिताःकार्याःषष्टिहृताःकार्याः ताः स्पष्टास्युः स्पष्टानंतरंचतुर्नाड्यो

विषाख्याज्ञेयाः अथविषघटीनामपवादमाह चंद्रइति चंद्रःसौम्यभगःशुभग्रहराशिगःसन् विषभयंहंति अथवाशुभसुहृत्तत् दृष्टः
शुभश्चासौसुहृत्त्वंचतेनदृष्टःसन् विषभयंहंति अथवास्वांशगःस्वनवांशेवर्त्तमानःसन् विषभयंहंतिवा इत्यथवाकोणास्ताभ्रसुखगोपिचंद्रो
विषभयंहंति कोणेपंचमनवमे ५।९ अस्तभंसप्तमं अभ्रंदशमं सुखंचचतुर्थं एतत्स्थानगोपिचंद्रोविषभयंहंतीत्यर्थः अत्रास्मिन्कोणा
दिस्थानेसांगेलग्नेवर्तमानः अंगपोलग्नपोविषभयंहंतीत्यर्थः एवंपंचभंगाःसंति ननुसप्तमखेटोविवाहेनिंदितः कथमत्रचंद्रोगृहीतः सत्यमि
दंवाक्यंसर्वकर्मसाधारणम् तस्मान्निंदितंस्थानंवर्जयित्वा अन्यत्रग्राह्यः तथाचबृहस्पतिः चंद्रोविषघटीदोषंहंतिकेंद्रत्रिकोणगः लग्नंविना
शुभैर्दृष्टः केंद्रेवालग्नपेतथा फलप्रदीपे विषनाड्युत्थितंदोषंहंतिसौम्यर्क्षगःशशी मित्रदृष्टोथवास्वीयवर्गस्थोलग्नपोपिच ॥ २३ ॥ ७ ॥
॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथविवाहलग्नेइष्टानष्टग्रहानाह चंद्रःखलाश्चतेचंद्रखलाः लग्नेवर्तमानाः शुभचेशोकायभवंति तथारिपौषष्ठेविधुसितौचंद्रशुक्रौ तथासर्वेद्यु
नेसर्वेक्रूरसौम्याद्यूनेसप्तमे तथाखेदशमेबुधः तथाअब्जजश्चंद्रोंत्ये अगुःराहुःस्फखगश्चतुर्थगः नविद्यंतेगावःकिरणायस्येत्यगुः तमोगुश्चे
ति बृहज्जातकेराहुनामानि तथाअष्टमाः कुजशुभाः कुजश्चशुभाश्चतेतथा शुक्रस्तृतीयइतिस्पष्टार्थः एतेप्रत्येकंउक्तस्थानगाः शुभचेशो
कायभवंति अथइष्टानाह लाभेएकादशेसर्वखगाः तथासौम्याःशुभग्रहाः अखिलगाःनिंद्यंविनासर्वस्थानगाः तथाखलाःक्रूराः अरि

लग्नेचंद्रखलारिपौशशिसितौसर्वेद्युनेखेबुधोब्जोंत्येगुःस्फखगोष्टमाःकुजशुभाःशुक्रस्तृतीयःशुभचे॥लाभे
सर्वखगाःशुभाअखिलगास्त्र्यष्टारिगाःस्युः खलाश्चंद्रस्त्र्यंबुधनेश्रियेंशभदृगेट्स्यान्मृत्यवेष्टारिगः॥ २५॥

षगाः तृतीयाष्टषष्ठगाः नत्रअष्टमभौमोनिंदितः नंविनापापाअष्टमाख्याः चंद्रस्त्र्यंबुधने तृतीयचतुर्थद्वितीयेचंद्रः एतेप्रत्येकंश्रियैल
क्ष्म्यैभवंतिश्रीकारकाइत्यर्थः एवंशुभाशुभग्रहानुक्तातत्रविशेषमाह अंशभदृगेट् अष्टारिगःसन् मृत्यवेस्यात् अंशोनवांशः भंलग्नं दृक्
कोदृगणः एषामिट्स्वामी नवांशस्वामीलग्नस्वामी दृक्काणस्वामी एतेप्रत्येकंअष्टषष्ठगाः मृत्युहेतवोभवंतीत्यर्थः॥ २५॥ ७॥

अथमंभृगुषष्ठापवादमाह कन्याप्रसिद्धा शुक्रस्यनीचं तौक्षिकोधनुर्धरः शत्रुगेहंपूर्वोक्तं भृगुभवः शत्रुरवींदुइति तत्ररवेर्गृहंसिंहः इंदोर्गृ
हंकर्कः एषांकन्यादीनांअन्यतमगेहगतोभृगुःषष्ठोपिनोभंगकृत् लग्नभंगकरोनभवतीत्यर्थः तथाचकश्यपः नीचगेतत्तुरीयेवाशत्रुक्षे
त्रगतोपिवा भृगुषष्ठोद्भवोदोषोनास्तीत्यत्रसंशयः अथकुजाष्टमदोषापवादमाह भौमोमृत्युगतोपिअष्टगतोपि शत्रुशशिनोर्गेहस्थितोपि
यदिभवत्तिवाइत्यथवा अर्कगःअस्तंगतोपियदिभवतितदानोभंगकृत्स्यात् अस्यशत्रुर्बुधः कुजस्यविदरिरितिप्रागुक्तः तस्यगृहंकन्यामिथुनंच

कन्यातौक्षिकशत्रुगेहगभृगुःषष्ठोपिनोभंगकृत्भौमोमृत्युगतोपिशत्रुशशिनोर्गेहस्थितोवार्कगः ॥ ॥

राशिगृहंकर्कटकः तस्यनीचं एषामन्यतमस्थः अस्थंगतोवा अष्टमगतोपिवालग्नभंगकरोनभवतीत्यर्थः अस्तगेनोच्चगेभौमोशत्रुक्षेत्रग-
तोपिवा कुजाष्टमोद्भवोदोषोनकिंचिदवशिष्यतइति अथद्वादशषष्ठचंद्रापवादमाह शुक्लेति शुक्लपक्षेअंत्यारिविधुः द्वादशषष्ठश्चंद्रः शुभवर्गदृ
गितः वर्गश्च दृशश्चवर्गदृशः शोभनानांवर्गदृशःशुभवर्गदृशः इतःप्राप्तःशुभवर्गदृगितः शुभवर्गशुभदृष्टियुतइत्यर्थः एवंविधोविधुःशुभ-

दः स्यात् कस्मिन्सति ईज्येगुरौशुक्रेवा तनौलग्नेसति कथंभूतेगुरौ स्वोजोयुजि सुतरांओजः स्वोजः उत्कृष्टबलं तेनयुनक्तीतिस्वोजोयुक् तस्मि
न्स्वोजोयुजि अतिबलिष्ठेसतीत्यर्थः शुक्रस्याप्येतद्विशेषणं एतदुक्तंभवति बलिष्ठेगुरौशुक्रेवालग्नस्थेसति शुक्लपक्षेचंद्रमाः स्ववर्गदृष्टिस
हितोयदिभवतितदाद्वादशषष्ठगोपिशुभदइतिभंगकरोनस्यात् अन्यथान मुहूर्तदर्पणे कवौगुरौवाबलिनिस्थितेतनौशुभेनदृष्टः शुभ-
वर्गगः शशी विवर्धमानः शुभकृच्चनाशुभंकरोतितिष्ठन्नपरिःफषष्ठयोरिति अथसग्रहचंद्रदोषापवादमाह सग्रहः ग्रहेणग्रहाभ्यांग्र

शुक्लेत्यारिविधुः स्ववर्गदृगितः स्वोजोयुजीज्येतनौ शुक्रेवाशुभदोथकंटकनिजांशेज्येक्षितः संग्रहः २६

हैर्वासहवर्तमानः सग्रहः बुधगुरुवर्ज्यअन्यग्रहयुक्तइत्यर्थः यतः पूर्वमुक्तम् हिमरुचिंज्ञेज्योनखेटान्वितमिति एवंविधः विधुः सग्रहः
केंद्रनिजवर्गेज्येक्षितः सन् शुभदः स्यात् केंद्रंप्रसिद्धं निजवर्गोनिजांशः तत्रवर्तमानोईज्यः केंद्रनिजवर्गेज्यः तेनईक्षितः अवलोकितः
सग्रहः चंद्रमाः शुभदः भंगकरोनस्यात् उक्तंच गुरुः स्वकीयवर्गस्थोबलवान्कंटकाश्रितः पश्यन्सन्ग्रहशीतांशुं तद्दोषंविलयंन
येदिति ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

अथसामान्यदोषापवादमाह दोषाणामिति कंटककोणगः केंद्रकोणगः इंदुजःबुधः दोषाणांशतंघातयेत् तत् १।४।५।७।९।१०स्थःशुक्रः दोषा
णांशतयुगंद्विशतंघातयेत् तत्स्थः१।४।५।७।९।१० बृहस्पतिःदोषाणांलक्षंघातयेत् अपवादांतरमाह अंगंलग्नंइनचंद्रोजस्विपातादिकान् घात
येत् इनचंद्रयोः सूर्यचंद्रयोः ओजोबलमस्यास्तीतिइनचंद्रोजस्वि एवंविधंलग्नंपातादिकान् घातयेत् उक्तंचवसिष्ठेन एकार्गलोपग्रहपातल
ता जामित्रकर्तर्युदयादिदोषाः नश्यंतिचंद्रार्कबलोपपन्नेलग्नेयथार्काभ्युदयेंधकारइति अथदोषापवादभंगमाह भंगाइति येभंगाःदोषभं

दोषाणांशतमिंदुजःशतयुगंशुक्रोगुरुर्घातयेल्लक्षंकंटककोणगोंगमिनचंद्रोजस्विपातादिकान् ॥ भंगायेवि-
बलानतेत्रसफलाःसंध्यंशतुल्योफलःस्याद्भावांशसमोग्रहोऽखिफलःसंध्यूर्ध्वगःस्यात्परः ॥ २७ ॥

गाःविबलाःगतबलानिर्बलास्तेत्रदोषभंगविषयेसफलानभवंति दोषभंगसमर्थानभवंतीत्यर्थः तस्माद्दोषभंगकृतांबलंविचार्यदोषभंगमादिशे
दितिभावः उक्तंच सामान्येनोदितादोषाभंगास्तेषांतुनद्विधैः यदितेबलहीनाःस्युःप्रध्वंसाभावतांययु अथभावफलद्धिमाह संध्यंशतुल्योफलःइति
संध्यंशतुल्यःसंधिभागसमानोग्रहःअफलःस्यात् सदसत्फलदोनभवति भावांशतुल्योग्रहः अखिलफलःस्यात् संपूर्णफलदोभवति अ
र्थान्मध्येअनुपातात्फलंवेद्यं विशेषफलमाह संध्यूर्ध्वगःस्यात्परइति संध्यूर्ध्वगःसंध्यंशाधिकःपरःस्यात्परभावफलदःस्यादित्यर्थः ॥ २७ ॥

संध्यंशतुल्यइत्याद्युक्तं तत्रकेनेसंधयः केतेभावाइत्यपेक्षायांतत्संधानंकिंचित्स्थूलमेकेनवृत्तेनाह भागास्युरिति ननाडिकारसहताभागाः स्युः नतसाधनंजातकपद्धतावुक्तं रात्रेःशेषमितंयुतंदिनदलेनाह्नोगतंशेषकंविश्लेष्यंस्वलुपूर्वपश्चिमनतमिति एतदुक्तंभवति सूर्येष्टका-लाभ्यांइष्टकालंसाधयित्वानतंचसाधयित्वातदिष्टकालभवंनतंषड्गुणंनतभागास्युरित्यर्थः प्राक्पश्चिमेनतेनक्रमेणतन्न्यूनयुक्सूर्यःतै र्भागैर्न्यूनयुक् पूर्वनतेसति न्यूनः पश्चिमनतेसतियुक्युक्तः तत्कालिकः सूर्यःखंस्यात् दशमभावःस्यादित्यर्थः तथाखंदशमभावंसरसं

: भागास्युर्नतनाडिकारसहतास्तद्धीनयुक्प्राक्परेसूर्यःखंसरसंस्फखंकथितवल्लग्नंषड्भंमदः ॥

षड्राशियुक्तंसत् स्फखंचतुर्थभावःस्यात् कथितंज्ञेयं तल्लग्नंषड्भंषड्राशियुक्तंसत्मदः सप्तमभावःस्यात् एवंभावचतुष्टयंसाधयित्वा अंत र्भावसाधनमाह व्यस्ताभ्रारिलवइति विगतः अस्तः अस्तभावोयस्मात्तद्व्यस्तं तच्चतत् अभ्रंचव्यस्ताभ्रं सप्तमभावरहितदशमभावइ त्यर्थः तस्यत्रिलवोराश्यादिकोमात्यः अथदृकच्युतःद्विपतितःकार्यः एतौउभौकेवलत्रिलवदृकच्युतत्रिलवौ पृथकुकुदृग्नौसंतौपृथक्पृ थक्लग्नेअंबुनिचयोज्यौ अयमर्थः कुघ्नःत्रिलवोलग्नेयोज्यः सद्वितीयभावोभवति दृग्नोलग्नेयोजितः तृतीयभावोभवति अथदृकच्यु

च्युतः त्रिलवः कुघ्नः अंबुनि पूर्वसाधितचतुर्थभावेयोजितः पंचमभावोभवति द्विघ्नोंबुनियोजितःषष्ठभावोभवति तेषडनंतरसाधिताभावाः षड्
राशिसहिताःकार्याः नेतुसप्तमाद्याज्ञेयाः लग्नषड्भंपदमितियावत् तेतुलग्नमुखाल्लग्नाद्योभावाःस्फुः अथसंधिसाधनमाह संधिर्द्वियोगोर्धि
तमितिद्वयोर्भावयोर्योगः अर्धितः संधिःस्यादितिस्पष्टं अथपागतरस्यव्याख्या व्यस्तेति सप्तमभावरहितस्यदशमभावस्य अरिलवः

व्यस्ताभ्रारिलवोथभूच्युत इमौभूयोंगपातालयोः क्षेप्यौषड्तनुगःससंधयइमेषड्भान्विताःस्युःपरे २८

षड्भावोराश्यादिकः पृथक्पृथक् भूच्युतः एकस्मात्पतितः इमौउभौभूयः वारंवारं अंगपातालयोः प्रथमचतुर्थभावयोःक्षेप्यौ तनुनःल
ग्नात्ससंधयः संधि सहिताःषड्भावाःस्युः इमेभावाःषड्भान्विताःपरेससंधयोभावाःस्युः एवंभावसंधिसाधनंकृत्वासंध्यंशतुल्योफ-
लइतिप्रागुक्तंग्रहफलंविचार्यं अंतरेअनुपातःभावसंध्यंतरेणाप्तंखेटसंध्यंतरात्फलमितिजानकपद्धतेः एतत्स्थूलभावानयनं सूक्ष्मंतुजातकपद्ध
तावनगंतव्यं २८

अथकर्तरीदोषलक्षणंसापवादमाह इंदोर्वेति इंदोश्चंद्रात्सकाशात् वाइत्यथवाहरिजाल्लग्नात्सकाशाद्व्यय १२ स्व २ गतयोः उभयत्रगतयोः क्रूरयोःपापग्रहयोःसतोःकर्तरीस्यात् अथमहाकर्तरीलक्षणमाह स्वेद्वितीयंस्थितःक्रूरःयदिवक्रीस्यात् अंत्येद्वादशेस्थितःक्रूरः ऋजुःमार्गगामीस्यात् तदामहतीकर्तरीस्यात् एवंकर्तरीलक्षणमुक्त्वातत्भंगमाह गुरौरिःफे प्राप्तेसतिसाकर्तरीनस्यादेवेत्येकोभंगः वाइत्यथवाशुक्रभेगृ

इंदोर्वाहरिजाद्व्ययःस्वगतयोःस्यात्क्रूरयोःकर्तरीस्वेवक्र्यंत्यऋजुर्महत्यथगुरौरिःफेशुक्रभेवातनौ ॥ स्वेब्जे
सौम्यखगेपिवागुरुभृगुज्ञैःकेंद्रकोणेषुवाचेत्स्वःकर्तरिकारकौदिविचरौनीचस्थितौसानहि ॥ २९ ॥ ॥

हेबुधशुक्राणामन्यतमेतनौलग्नेसतिसानेतिद्वितीयोभंगः स्वेद्वितीयेअब्जेसतिसानेतितृतीयोभंगः वाइत्यथवा सौम्यखगेद्वितीयेसतिसानेतिचतुर्थोभंगः वाइत्यथवाकेंद्र १।४।७।१० त्रिकोणेषु ५।९ भृगुविदीज्यैःशुक्रबुधगुरुभिःतैःषड्भिःकालाच्चेतिसप्तम्यर्थेतृतीयासाकर्तरीनस्यादेवेतिपंचमोभंगः वाइत्यथवाकर्तरिकारकौक्रूरौदिविचरौनीचस्थितौयदास्यातांतदासानस्यादितिषष्ठोभंगः हिअवधारणे ॥ २९ ॥
॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथपंचकदोषंसापवादमाह लग्नेति लग्नंइष्टलग्नंसेततिथिइनाचासौतिथिश्चइनतिथिः गततिथिः तयासहवर्तमानंसेततिथियहैर्र्हृतनवभ
क्तंकार्यं इभहृग्वेदर्तुभूशेषकेः इभाष्टौ हृशौद्वे वेदाश्चत्वारः ऋतवःषट्भूरेका एतन्मितैः शेषकैःकृत्वाक्रमेणरोगाग्नीनहृराल्ययाःस्युः रोगःप्र
सिद्धः अग्निप्रइनोराजा राजाधिपःपतिःस्वामीनाथःपरिवृढःप्रभुः ईश्वरोविभुरीशानभर्तेंद्रइनईशितेतिधनंजयः हृस्चौरः अत्ययोमृत्युः
एतेपंचकाःस्युरित्यर्थः एतदुक्तंभवति लग्नंशुक्लप्रतिपदादिगततिथियुक्तंकृत्वानवभिर्हृत्वा अष्टशेषेरोगः द्विशेषेअग्निःचतुःशेषेराजा ष

लग्नंसेततिथियहैर्र्हृदिभहृग्वेदर्तुभूशेषकैरोगाग्नीनहृराल्ययास्त्यजरुजंरात्र्यर्कमौंजीषुच ॥ अग्निंभौ-
मगृहक्षुघ्नशनिसेवेंदुधिनंहारमीज्यारेतिघपरंविवाहसितवित्संध्यासुहीनेतनौ ॥ ३० ॥ ७ ॥

हृशेषेचौरः एकशेषेमृत्युः अथैतेकुत्रवर्ज्याइत्याह रात्र्यर्कमौंजीषुरुजंत्यज रात्रौअर्केआदित्यवारेमौंज्यांरुजंत्यज भौमगृहक्षुअग्निंत्यज
भौमादयःप्रसिद्धास्तेषु घ्नशनिसेवेंदुषुईनंत्यज घ्नर्दिवाशनिःशनिवारः सेवास्वामिसेवनं इंदुःसोमवारः एषुएनंराजानंराजपंचकंत्यज ईज्यारे
तिषुहारंत्यजचौरंत्यजईज्योगुरुवारः आरोभौमवारः इतिर्गतिर्यात्रेतियावत् आसुचौरंत्यजेत्यर्थः विवाहसितवित्संध्यासुअपरंउर्वरितंमृत्यु
मित्यर्थः विवाहःप्रसिद्धःसितःशुक्रवारःवित्बुधवारःसंध्यासंध्याकालः आसुमृत्युंत्यजेति अस्यापवादमाह कस्मिन्सति तनौलग्नेहीनेही

नबलेसति बलिष्ठलग्नंसतिएषांकिमपिनबाधइत्यर्थः तथाचज्योतिःप्रकाशेरोगंचौरंत्यजेद्रात्रौइत्यादि तत्रापियत्रलग्नंचेद्बलाढ्यंतत्रचनिःफ
लमिति बलंजातकात्ज्ञेयं लघुजातकं अधिपयुतोदृष्टोवाबुधगुरुनिरीक्षितश्चयोराशिः सभवतिबलवान्नयदायुक्तदृष्टोपिवाशेषैरित्यादि
॥३०॥ अथभवनांशयोःशुभत्वंसापवादमाह जन्मर्क्षोदयतः जन्मराशिजन्मलग्नाभ्यांसकाशात्तृतीयेअष्टमभवनेयोतदधिपौतयोर्मृत्यु-
भवनयोःस्वामिनौ येचतद्गाःमृत्युभवनगताःस्युः तेषांअंशोनवांशः अंगगोलग्नगतः चपरंतेषांभंराशिः अंगगंलग्नगतंसत्तद्गाःखलुनि

जन्मर्क्षोदयतोमृतीतदधिपौतद्गाश्चयेतत्खलुवस्तच्चंचांगगमंतकृत्खलुनचेत्तत्स्वामिमित्रैकता॥

श्चयेनअंतकृत् मरणकृत्स्यात् तदाकदाचेद्यदितत्स्वामिमित्रैकतानस्यात् तयोर्जन्ममृत्युभवनयोःस्वामिनौतत्स्वामिनौतयोः अथवाय
मर्थः तयोर्जन्मनिंद्यभयोःस्वामिनौतत्स्वामिनौतयोर्यदिमित्रैकतानस्यात् मित्रंचएकश्चमित्रैकौमित्रकयोर्भावोमित्रैकतासाचेन्नस्यात् अ
नेनसर्वस्योक्तस्यसार्थकताभवति यदितयोर्मित्रतास्यात् अथवाएकतास्यात्तदानायंदोषइत्यर्थसिद्धं वसिष्ठः तस्याष्टलग्नेतदधीश्वरो
वाराशौतदीशेथविलग्नगेवा समृत्युमाप्नोतितदामनोजस्त्रिनेत्रभालांबरवन्हिनेवेति अन्यच्च जन्मर्क्षजन्मलग्नाभ्यांलग्नेशावष्टमौचयो॥

विलग्नसंस्थितानेतांस्तद्वारयंशानपित्यजेदिति चूडामणौ लग्नंव्यलिवृषंत्याज्यमष्टमंसर्वकर्मस्॰ तत्राप्येकेशतास्त्येवनतस्तन्नैवदोषकृत् न
दोषोष्टमलग्नस्ययदिजन्मेशरंध्रपौ कृत्द्दौचेत्तदाकार्यमंगलंमुनयोविदुरिति चतुर्थद्वादशभवनयोर्दोषोनात्रोक्तः यतश्चतुर्थद्वादशंलग्नेश
स्तंयदिगुणान्वितमितिपूर्वाचार्यमतंव्द्दरिध्यत्वासगुणामेवांगीकृतं तत्पुरस्ताद्वक्ष्यति नचतनुंपंचेष्टखेटोनितां तनुंलग्नं इष्टाश्चतेखेटाश्चइष्ट
खेटाः पंचतेइष्टखेटाश्चपंचेष्टखेटाःइष्टग्रहैःपंचभिःशुभैर्दैःइष्टैस्वनितंहीनंलग्नंचेद्बदवर्गोनितमिति सगुणस्यैवांगीकारात्किंव्यर्थविस्तरे

शस्तोंशोघटयुग्मभीरुधनुषांविज्ञास्तभांशौतथाचंद्रापुण्ययुतोमृतिंवितनुतोदैत्यंचहीनोजसः ॥ ३१ ॥

णेतिभावः अंशशुद्धिमाह शस्तोंशइति घटयुग्मभीरुधनुषांअंशःशस्तःस्यात् घटस्तुलायुग्मंमिथुनंभीरुःकन्याधनुःप्रसिद्धं एषामंशो
नवांशःप्रशस्तस्यात् तत्रापिविशेषमाह विज्ञास्तभांशाविति विगतःज्ञोबुधोयेभ्यस्तेविज्ञाः तेचतेअस्ताश्चतेषांभांशौराशिनवांशौमृतिंवितनुतःअर्थात्
तस्यापिबुधस्यभांशौदोषकरौनभवतः तथा चंद्रापुण्ययुतोचंद्रेणपापग्रहेणवायुक्तौमृतिंवितनुतःकुरुतःवधूवरयोरितिशेषः हीनौजसोर्निर्ब
लस्तमिलस्यभांशौदैन्यंदीनतांवितनुतः॥ ३१ ॥ ॥ ॥ ॥ ॥

अथविशेषांतरमाह वर्गोत्तमतःस्वगोत्तमेनविनाअंतिमलवंचरमंनवांशनोदद्यात् यल्लग्नंसएवनवांशोवर्गोत्तमः तथाचरर्क्षेचरलग्नेचरंनवांशंनोदद्यात् क
स्मिन्सति चंद्रेतौलिमृगास्यगेतुलामकरगेसति एतच्चरत्रययोगेनोदद्यादित्यर्थः अत्रचरचतुष्टयमध्येचंद्रेतौलिमृगास्यगेइत्येवोक्तं तन्मेषकर्कट-
योर्विवाहनक्षत्राभावात् तथातनुंलग्नंपंचेषुखेदोनितांनोदद्यात् यत्रलग्नेपंचइष्टग्रहाःनभवंति तल्लग्नंनदेयमित्यर्थः अथेष्टनवांशाल्लग्नसाधनमाह
तत्रतावन्मेषादिषुआद्यांशानाह मेषादिष्विति मेषादिषुअजनक्रतौलिककुलीराद्यानवांशाःक्रमेणोक्ताः तद्यथा मेषेअजाद्याःमेषाद्याः वृषेनक्रा-

॥नोवर्गोत्तमतोविनांतिमलवंदद्याच्चरर्क्षेचरंचंद्रेतौलिमृगास्यगेनचतनुंपंचेषुखेदोनितां॥ मेषादिष्वजनक्र
॥तौलिककुलीराद्यानवांशाःक्रमादिष्टात्पूर्वनवांशकादशहतास्त्र्याप्तालवाद्यातनुः ॥ ३२ ॥ ७ ॥

द्याःमकराद्याः मिथुनेतौलिकाद्याःतुलाद्याः कर्कटेकुलीराद्याः कर्कटाद्याः एवंपुनःसिंहेमेषाद्याः कन्यायांमकराद्याः तुलायांतुलाद्याः वृश्चिकेक
र्काद्याः पुनर्धनुषिमेषाद्याः मकरेमकराद्याः कुंभेतुलाद्याः मीनेकर्काद्यानवांशाउक्ताः इत्यर्थः इष्टांदशास्पूर्वनवांशकाःगतांशाः दशहताः दशगुणिताः
त्र्याप्ताःत्रिभिर्हृताः लवाद्याभागाद्याः तनुःलग्नंस्यात् अत्रोदाहरणं इष्टलग्नंमेषः तत्रमेषादिकाअंशाःप्रवर्तंतेइष्टांशः कन्यासअद्यास्वष्ठः पूर्वन
वांशकाःपंचएतेदशहताः ५० त्र्याप्ताः लवादिफलं ।१६।४० इष्टलग्नसहितंराश्यादि १६।४०।३२॥ ७ ॥ ७ ॥ ७ ॥

अथोदयास्तशुद्धिमाह लग्नांशौलग्ननवांशौस्वपदृग्युतौस्वस्वपतिनादृष्टौयुतौवासंतौनृशुखदौवरस्यशुखदौस्यातां वाइत्यथवा अन्योन्यपादृष्टेक्षितौअन्योन्यपतिना आदृष्टौईक्षितौवासंतौनृशुखदौस्यातां इत्युदयशुद्धिमुक्त्वा अस्तशुद्धिमाह ताभ्यांसप्तमकौनथैवेति ताभ्यांलग्नांशाभ्यांसकाशात्सप्तमकौसप्तमलग्नतदंशौ तथैवेति पूर्ववत्स्वपदृग्युतौयुवतेः कन्यायाः शुखदौस्यातां वाइत्यथवातौसप्तमलग्नसप्तांशकौ अन्योन्यपादृष्टेक्षितौयुवतेःशुखदौस्यातां नोचेत् एवंचेन्नस्यात् तदातयोर्मृत्युदौस्यातांक्रमेण अथेष्टकालेहोरासाधनमाह द्विघ्नेइति अर्कोनवलग्नकेद्विघ्नेरु

लग्नांशौस्वपदृग्युतौनृशुखदौवान्योन्यपादृष्टेक्षितौताभ्यांसप्तमकौतथैवयुवतेर्नोचेत्तयोर्मृत्युदौ॥ द्विघ्नेर्कोनविलग्नकेरविसितज्ञेंद्वार्किजीवासृजोहोरेशाद्युपतेः खलेन्हिखलजानेष्टाशुभेमध्यमा॥ ३३॥ ७ ॥

तेसति द्युपतेःसकाशात्होरेशाभवंति तेषांगणनाक्रममाह तेकेहोरेशा तेषांगणनाक्रममाह तेकेहोरेशाः रविसितज्ञेंद्वार्किजीवासृजः रविःप्रसिद्धः सितःशुक्रः ज्ञोबुधः इंदुश्चंद्रः आर्किःशनिः जीवोगुरुः असृङ्मंगलः खलेन्हिपापवारेखलजाहोरानेष्टाशुभेमध्यमास्यात् अर्थाच्छुभहोराशुभवारेशुभतरा पापवारेमध्यमास्यात् अत्रोदाहरणं गुरुवारेइष्टार्काः १।२५।८ इष्टलग्नं ५।१०।० इंदेअर्कोनं २।१५।५२ इंद्रंद्विघ्नं ४।२९।४५ उर्ध्वांकसमानागताहोराश्चतस्रःवर्तमानापंचमीहोरा सागणनाक्रमेणद्युपतेर्गुरोःसकाशात्गणनीयाःजीवासृजादिगणनयाबुधहोरावर्तमाना॥ ३३॥

अथलग्नेंद्वोःपरजामित्रमहद्ज्ञानार्थेउपायमाहतावत्तस्यफलमाह लग्नेंद्वोस्मरगेसप्तमगेशुभाशुभखगेसति तदाआधिमृत्यूस्तःशुभे सतिआधिर्मनस्तापोस्ति अशुभेसतिमृत्युरस्ति तदाकदा यदाततःस्मरगाद्ग्रहात् अबुजांगोनात् चंद्रलग्नोनात् चंद्रात्सप्तमस्थचंद्रोनःलग्ना त्सप्तमस्थोलग्नोनइत्यर्थः तस्मात्कृतमौर्विकात्कृतकलिकात्खखयमैर्हृतशेत्याल्लब्धं अध्रीषवःचतुःपंचाशत्स्यात् तदैवआधिमृत्यूस्तःअन्यथा नेत्यर्थः तत्रोदाहरणं पूर्वकल्पितमिदंलग्ने ५।१०।७ तत्सप्तमगोयंकश्चित् १०।११।७ अयंलग्नोनः २६।१।७ अयंकृतमौर्विकिः १०८१७ अ

॥ लग्नेंद्वोःस्मरगेशुभाशुभखगेस्तश्चाधिमृत्यूततोबुजांगोनात्कृतमौर्विकात्खखयमैर्लब्धंयदाध्रीषवः॥

॥ सन्स्विष्टोच्चनिजांशभेस्तमखिलंपश्येदरिघ्नायगेसूर्येवाख १० जला ४ द्य १ कोण ग ९।५ शुभोवाजप्रपश्येन्नतत् ३८

स्मात्खखयमैः २०० लब्धं ५४ अथास्यभंगमाह सन्निति सन्सद्ग्रहस्विष्टोच्चनीचांशभेवर्तमानःअस्तंसप्तमभवनं अखिलंपूर्णंयदिपश्ये- त्तदातज्जामित्रंनस्यात् शोभनश्चासौइष्टश्चस्विष्टःशुभमित्रंस्विष्टश्च उक्तंच निजश्च स्विष्टोच्चनिजाःअंशश्चभंचअशभं स्विष्टोच्चनि जानांअंशभं स्विष्टोच्चनिजांशभंतस्मिन्स्विष्टोच्चनिजांशभे स्विष्टस्यसुभमित्रस्यअंशेनवांशेभेराशौवावर्तमानः अथवाउच्चस्यांशेभे- वावर्तमानः अथवानिजस्यस्वस्यअंशेभेवावर्तमानः अस्तमखिलंपश्येत्तदातन्नेतिषट्भंगाः वाइत्यथवाअर्केरिव्रोअरिघ्नायगेसतिषष्ठतृतीये

कादशगेसतितन्नेतित्रयोभंगाः वाइत्यथवाखजलाद्यकोणगःशुभः अबूजंचंद्रमसंपूर्णयथास्यात्तथाईक्षेतपश्येत् तदातन्नखंदशमंजलंचतुर्थ-
आद्यंलग्नंकोणेनवपंचमेएषामन्यतमगतोन्यतमः शुभग्रहश्चंद्रमसंनिखिलदृष्ट्यायदिपश्येत्तदाजामित्रंनस्यादित्यर्थः एतेपंचभंगाःसर्वेमिलिता-
श्चतुर्दशभंगाःसंपद्यंते॥३४॥ अथदृष्टिलक्षणमाह त्र्यभंतृतीयदशमंकोणंनवपंचमंअब्धायुश्चतुर्थाष्टमं एतद्युग्मत्रयंक्रमेणऐनिगुरुभूपुत्राः
शनिगुरुभौमाःपूर्णयादृष्ट्यापश्यंति शनिः त्र्यभं ३।१० गुरुः कोणं ९।५ भूपुत्रः अब्धायुः ४।८ एतेपूर्णयादृष्ट्यापश्यंति तथाचैतद्युग्मत्रयंअन्ये

त्र्यंभंकोणमब्धायुरैनिगुरुभूपुत्राः क्रमात्पूर्णयादृष्ट्यान्येचरणोत्तरंचसकलाःपश्यंतिपूर्णफलं॥ भंहोरा-
त्रिलवोनवांशकइनांशस्त्रिंशद्दशः क्रमाद्वर्गाः सन्शुभजःपरैस्तुसुहृद्भोनाब्ध्यूनवर्गातनुः॥ ३५॥ ७ ॥

ग्रहाश्चरणोत्तरंयथास्यात्तथापश्यंति तद्यथा त्र्यभं ३।१० एकपाददृष्ट्यापश्यतिकोणं ९।५ द्विपाददृष्ट्याअब्धायुः ४।८ त्रिपाददृष्ट्यापश्यंति सक-
लाग्रहाः द्यूनंसप्तमंपूर्णपश्यंति अथषड्वर्गसाधनंविवक्षुस्तावन्नामान्याह भंहोरेति होराराश्यर्धंत्रिलवोद्रेक्काणः नवांशकःप्रसिद्धः इनांशो-
द्वादशांशः त्रिंशद्दशःप्रसिद्धः क्रमादेतेवर्गाःप्रोक्ताःशुभजःशुभग्रहजोवर्गःसन्शुभःप्रोक्तःपरैराचार्यैःसुहृद्भोमित्रस्यवर्गःसन्प्रोक्तः
अब्धिवर्गोनकंअंगंचतुर्थवर्गोनंलग्नंनसत्प्रोक्तं॥ ३५॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथैषांसाधनमाह॥ यस्यग्रहस्ययद्गृहंतत्प्राक्प्रोक्तं॥ भेशामंशफबुचमित्यादि॥ अथहोरासाधनमाह॥ ओजभेविषमराशौअर्कशशिनोर्होरेक्रमे-
णभवतः॥ प्रथमपंचदशभागेषुअर्कस्यहोरा॥ अपरपंचदशभागेषुशशिनः चंद्रस्यहोरास्यात्॥ अथसमराशौअब्जार्कयोर्होरेक्रमेणभवतः॥ प्रथ-
मंपंचदशभागेषुचंद्रस्यहोरा॥ अपरपंचदशभागेषुअर्कस्यहोरास्यात्॥ अथदृक्काणसाधनमाह॥ दृक्केडिति॥ दृक्कोदृक्काणःत्रिविधोदशदश-
भागात्मकः तस्यईदृईशःप्राक्स्मृतधर्मपो ज्ञेयः॥ प्राक्लग्नं स्मृतः पंचमं धर्मोनवमं तान्पातीतिप्राक्स्मृतधर्मपः॥ एतदुक्तंभवति॥ प्रथमदृ-

प्रोक्तंप्राग्गृहमोजभे र्कशशिनोर्होरेसमेब्जार्कयोर्दृक्केट्प्राक्स्मृतधर्मपोनवलवःप्रोक्तःस्वतोर्कांशकः॥
शफक्ज्ञेज्ययमास्रृजांशरसुनीभार्थेषवोयुग्मभेत्रिंशाख्याविषमेतएवगदिताव्यस्ताश्चषड्वर्गकाः॥ २६

क्काणस्वामीलग्नपतिः द्वितीयदृक्काणस्वामीपंचमपतिः तृतीयदृक्काणस्वामीनवमपतिः स्यादिति नवलवःप्रोक्तःप्रागेवशस्तोंशइत्यादि॥ ॥
अथद्वादशांशसाधनं॥ स्वतोर्कांशकःस्वस्मात्इतिस्वतःलग्नतइत्यर्थः॥ अर्कांशकोद्वादशांशोज्ञेयः॥ तद्यथा॥ राशिभागाःत्रिंशत् ३० एते
द्वादशभिर्विभाजिताः लब्धंसार्धभागद्वयं २।३० इदंद्वादशांशमानंतदेवंगणनीयं॥ सार्धभागद्वयंलग्नस्यद्वादशांशः॥ तावदेवतत्पुरस्थस्य

नि॥ लग्नस्योत्पन्नभागावसानपर्यंतंगणयेत्॥ यस्मिन्राशौविश्रामः तत्स्वामीद्वादशांशनाथः स्यात्॥ अथत्रिंशांशसाधनं॥ शक्रेति॥ शक्रः प्र-
सिद्धः॥ ज्ञोबुधः ईज्योगुरुः यमःशनिः असृक्मंगलः एषांपंचानांक्रमेणशरमुनीभाष्टार्थेषवः स्फुःशराःपंचमुनयः सप्त इभाः अष्टौ अर्थाः
पंच इषवः पंचभागाःशक्रादीनांस्युः एतद्युग्मभेसमराशौज्ञेयं॥ एतदपिलग्नोत्पन्नभागावसानपर्यंतंगणयेत्॥ यत्रविश्रांतिःसत्रिंशांशना
थः॥ विषमेराशौतएवगदितायग्रहाः भागाश्चव्यस्ताविलोमाज्ञेयाः॥ इतिषड्वर्गोनिरूपितः॥ ३६॥ ॥ अथइष्टकालसाधनंविवक्षुस्तावत्

संक्रांत्यंतरहोहृताद्दिनगणाद्याप्तंभपूर्वोरविर्मेषाद्यातभयुग्युतोयनलवैराश्यौसषड्भः सच॥

सूर्यसाधनमाह॥ अंतःअंतरालंतत्रअहानिदिनानिसंक्रांत्योः अंतरहानिसंक्रांत्यंतरहानितैःहृतःभागितः एवंविधोदिनगणःसंक्रांतेःस-
काशात्इष्टदिनसमूहः तस्माद्यदाप्तंलब्धंसभपूर्वोराशिभागकलादिकोरविःस्यात्॥ किंभूतः रविः मेषात्सकाशान्यातभयुक्गतराशियुक्सू
र्यभुक्तराशियुगित्यर्थः॥ सतात्कालिकोरविःस्यादित्यर्थः॥ अत्रोदाहरणं॥ तुलावृश्चिकसंक्रांत्योरंतरदिनानि २९।५४।० तथातुलासंक्रांतेः इष्ट

दिनगणः ५।६।० अस्माद्दिनगणात्संक्रांत्यंतरंहोभिर्लब्धंराश्यादि ०।५।७।१ इदंसूर्यभुक्तराशियुक्तं ६।५।७।१ अयंतात्कालिकः सूर्यः सूर्यः अयन
लवैः युतः कार्यः अयनांशाः ग्रंथांतरेप्रसिद्धाः रुताब्ध्यब्धून्नितेशाकेषष्ठ्याप्ता अयनांशकाइति॥ सअयनलवयुतोरविः रात्रौरात्रीष्टकालसा
धनविषयेसषड्भः कार्यः षड्राशियुक्तः कार्यः॥ तद्भोग्यांशनिजोदयाहतिः खरामाप्तंकालः स्यात्॥ तस्यसायनांशस्यरवेः भोग्यांशाः तद्भोग्यांशा
श्चनिजोदयाश्चतेषामाहतिः गुणनं॥ तस्याः सकाशात्खरामासंत्रिंशतालब्धंसूर्यस्यभोग्यकालः स्यात्॥ निजोदयाः स्वदेशीयराश्युदयाः तेत्र

तद्भोग्यांशहतः स्वभोदयवियत्राप्तंतथालग्नतोभुक्तांशाकलितेनयुग्विवरगैः कालः स्फुटोभोदयैः ३७

रूतुल्यादिभ्योवगंतव्याः कथंभूतः कालः॥ तथैवागतोभुक्तांशाकलितेनयुक्॥ तथैवसूर्यस्यभोग्यकालसाधनरीत्याआगतः लग्नाद्भुक्तांशा
कलितेनभुक्तांशैर्भुक्तभागैः आकलितेनकालेनयुक्युक्तः॥ एतदुक्तंभवति॥ इष्टलग्नंअयनलवयुक्तंकृत्वातद्भुक्तांशैः निजोदयागुणनीयाः त्रिं
शताभाज्याः लब्धंलग्नंभुक्तकालः तेनकालेनसरविर्भुक्तः कालेयुक्तः कार्यइत्यर्थः॥ पुनः कथंभूतः विवरगैः भोदयैः युक्विवरंसूर्यलग्नांतरा
लं तत्रगतैर्भोदयैः राश्युदयैः युक्युक्तः सपलमयः कालः स्फुटः स्पष्टः इष्टकालः स्यात्॥ षष्टिभक्तेघटिकात्मकः स्यादित्यवगंतव्यं॥ ३७॥ ॥

अथेष्टकालसाधने विशेषमाह॥ ॥लग्नार्कौ लग्नसूर्यौ यदि एकभेस्तस्तदा अंशविवरात् लग्नार्कयोर्भागांतरात् स्वीयोदयघ्नात् निजराश्युदयगुणितात् यावियन्याप्तिः त्रिंशता लब्धिः स कालः स्यात् इष्टकालः स्यात्॥ तत्रापि विशेषमाह॥ इनात्तनुरिति॥ इनात्सूर्यात्तनुर्लग्नं यदि तनुः लघुः स्यात्तदा सोऽइष्टकालः सूर्योदयात्प्राक् पूर्वं स्यात्॥ सोपि षष्ठ्याभक्तो घटिकात्मकः स्यादित्यवगंतव्यं॥ अथ ज्ञातं कालं यंत्रैर्विना साधितुं न शक्यते अतो यंत्राणां मध्ये मुख्यस्य घटीयंत्रस्य स्थापनकालमाह॥ कुंडेति॥ अंभः परिपूरिते उदकपूर्णे कुंडे पात्रे घटिकामज्जनक्षमे॥ कुंडग्रहणं उत्ता

लग्नार्कौ यदि चैकभेंऽशविवरात्स्वीयोदयघ्नाद्वियन्न्याप्तिः काल इनात्तनुर्यदि तनुः सूर्योदयात्प्रागसौ॥ कुंडेंऽभः
परिपूरिते स्फुघटिकामर्धोदयास्तेऽन्यसेत्स्कृत्वाग्नित्रयवायुगानशफभदापूर्णाग्निपंचस्वथ॥ २८॥ ॥

नपात्रव्युदासार्थं॥ तस्मात्कुंडरूपपात्रे उदकपूरिते स्फुघटिकां षष्टिपलशफ्वद्धां न्यसेत् निक्षिपेत्॥ कस्मिन्सति॥ अर्धोदयास्ते जाते सति सूर्यस्य अर्धोदये अर्धास्ते च जाते सति॥ किं कृत्वा स्कृत्वा प्रार्थयित्वा॥ प्रार्थना ग्रंथांतरे उक्ता॥ त्वयाणां मुख्यरूपासि ब्रह्मणा निर्मिते घटि॥ दंपत्योः शुभका लाभिहेतवे भवशोभने इति॥ प्रतिष्ठितायां घटिकायां तद्भ्रमनफलमाह॥ सा प्रतिष्ठिता घटी अग्नित्रय वायुगानशफभदा स्यात्॥ अग्नित्रयं आ॰

ग्नेयादिप्रदक्षिणक्रमेणदिशात्रयंवायुर्वायव्यदिशा इतिदिक्चतुष्टयंप्रतिगतानशुभदा॥ अर्थादन्यदिग्गतातत्रैवस्थितावाशुभदास्यात्॥ तथाचोक्तंग्रंथं
तरे॥ संस्थैवंघटीतोयेयांदिशंप्रतिगच्छति॥ पूर्वाशादिफलंकुर्यात्स्थितामध्येधनप्रदा॥ सौभाग्यंनिर्धनंनार्याअपमृत्युरुजान्विता॥ भर्तृप्रियाच
वेश्यान्वमान्याचित्तसुतान्वितेति॥ एवंगमनफलमुक्त्वापूर्णताफलमाह॥ पूर्णाग्निपंचस्वथेति॥ अग्निपंचसु आग्नेयादिपंचसु दिक्षुपूर्णाघटीनशु
भदा॥ अर्थादन्यदिक्षुपूर्णाशुभास्यात्॥ उक्तंच॥ उत्तरेशानपूर्वासुपूर्णाघटीशुभप्रदा॥ दिक्षुशेषासुकन्यायामग्नावैधव्यदायिनी॥ ३८॥ ॥अ

गोधूलंपदजादिकेशुभकरंपंचांगशुद्धौरवेरर्धास्तात्परपूर्वतोर्धघटिकंतत्रेंदुमष्टारिगं॥

थगोधूललग्नमाह॥ ॥गोधूलंलग्नंसायंकाललग्नंपदजादिकेहीनजातौशुभकरंप्रोक्तं॥ नपूर्ववर्णानां॥ क्वपंचांगशुद्धौविवाहोक्तपंचांगे॥ अ
त्रपंचांगशुद्धिर्मुख्या॥ तत्रकालप्रमाणंविशेषणद्वारेणाह॥ ॥कथंभूतंगोधूलं॥ अर्धास्तात्सकाशात्प्राक्परतोर्धघटिकं॥ अर्धघटिकायस्मि
न् इति अर्धघटिकं॥ प्राक्पंचदशपलानिपरतः पंचदशपलानि॥ एवमर्धनाडिकमित्यर्थः॥ अत्रत्याज्यमाह॥ ॥इहास्मिन्गोधूललग्नेषष्ठाष्ट
गंइंदुंचंद्रंजह्यात्त्यजेत्॥ पुनःकिंकिंजह्यादित्याह॥ सौम्यांगंउग्रग्रहसहितंलग्नं॥ कुजंभौमंअष्टमं॥ गुरुयमाहः॥ गुरुशनिदिनं॥ पातंमहापातं॥

सिद्धांतगम्यं॥ अर्कक्रमंसूर्यसंक्रांतिंजह्यात्॥ अन्येदोषानत्याज्याइत्यर्थः॥ अत्रगुरुरयमाहस्त्यक्तंतद्दोषोपलंभात्॥ गुरुदिनेसूर्यास्तात्प्राक्यामार्धप्
रतोयमघंटः॥ शनिदिनेअस्तमयात्प्राक्परतश्चकुलिकौ॥ मार्तंडोदयतःस्मृतादिनपतेर्यामार्धनाथाग्रहामार्तंडात्मजभोगउत्तरलवस्तज्ज्ञैःशुभे
कर्मणि॥ त्याज्योसौकुलिकोथसूर्यदिवसादानैश्चशक्रार्कदिक्वस्वंगाब्धियमैःस्मृतःकुरहितैरात्रौतुतिथ्यंशकैरिति॥ त्याज्योसौकुलिकइत्यनेन
शनौअस्तात्प्राक्कुलिकोभवति॥ इनादौकुलिकंदिवेत्यादिव्येकंतन्निशीतिन्यायेनअस्तात्परतोऽपिकुलिकोभवति॥ इतिहेतोर्गुरुशनिवारौनिं

सोध्यांगकुजमष्टमंगुरुरयमाहःपातमर्कक्रमंजह्याद्विप्रसुरवेतिसंकटइदंसद्यौवनाद्येकवित्॥ ३९॥

दितौ॥ अथविप्रादीनामपिक्वचित्कार्यविशेषेणगोरजप्रवृत्तिमाह॥ विप्रसुरवेतिसंकटइदंसद्यौवनाद्येकचिदिति॥ यौवनाद्येअतिसंकटेप्राप्तेसति-
क्वचिल्लग्नशुध्यभावेइदंगोधूलंविप्रसुरवेविप्रप्रभृतिवर्णत्रयेसत्शुभंस्यात्॥ अन्यथानेत्यर्थसिद्धं॥ ॥तदुक्तंज्योतिर्निबंधे॥ ॥घटी-
लग्नंयदानास्तितदागोधूलिकंस्मृतं॥ शूद्रादीनांबुधाःप्राहुर्नद्विजानांकदाचन॥ लग्नशुद्धिर्यदानस्याद्यौवनेसमुपस्थिते॥ तदावैसर्ववर्णानां
लग्नंगोधूलिकंशुभमिति॥ ३९॥

अथोद्वाहवेदिकालक्षणमाह॥ प्राक्प्रवणापूर्वनिम्नांचतुर्वरकराचतुर्भिर्वरकरैः प्रमितावरोवैवात्यः॥ हस्तोच्छ्रिताहस्तप्रमाणेनोन्नता॥ इयम
ग्र्यस्यब्राह्मणस्यप्रोक्ता॥ सावेदीदोर्जादेः क्षत्रियादेः क्रमेणद्वित्रियुगांगुलैरपिचिताहीना॥ क्षत्रियस्यद्व्यंगुलन्यूना॥ वैश्यस्यत्र्यंगुलोना॥ शू
द्रस्यचतुरंगुलोना॥ साक्ककार्येत्याह॥ बहिर्वामतइति॥ गृहाद्बहिर्वामभागेअंगुलप्रमाणंमार्कंडेयपुराणेउक्तं॥ परमाणुःपरंसूक्ष्मंत्रसरेणुर्म
हीरजः॥ वालाग्रंचैवलिक्षाचयूकाचाथयवोदरं॥ क्रमादष्टगुणानाहुर्यवानामष्टतोंगुलं॥ षडंगुलंपदंतच्चवितस्तिद्विपदंस्मृता॥ द्विवितस्तीतथा

वेदीप्राक्प्रवणाचतुर्वरकराहस्तोच्छ्रिताग्र्यस्यदोर्जादेद्वित्रियुगांगुलैरपिचितासोक्ताबहिर्वामतः॥ यस्यांगंय
ददोंगिनोगदितभेकुर्यादिहेदोर्बलंनालोक्यंतुविवाहतःरुग्यरिनवाग्निप्राङ्नकुर्यादिदं॥ ४०॥

हस्तोमार्कंडेयमुनीरितः

आगमांतरेपि॥ कर्तुर्दक्षिणहस्तस्यमध्यमांगुलिपर्वणः॥ मध्यमादैर्घ्यमानेनमात्रांगुलमितीरितमिति॥ अन्यत्रोक्तं॥ यंकंचित्सौरुषायामं
विभज्यदशधापुनः॥ एकंद्वादशभागंतुकृत्वातेष्वेकमंगुलं॥ देहलब्धांगुलंनामजानीयात्तस्यनत्पुनः॥ महामानांगुलिरितिमात्रांगुलिरिहोदिता॥ प्रा
सादादीनितेनैवकुर्यान्मानांतरेणवा॥ वेदिकादीनिशिबिकारथादीनांविधिःपुनरित्यादि॥ अत्रवरकरग्रहणंतस्यहोमकर्तृत्वात्॥ ननुकन्यायाअ

पिलाजाहुतोकर्तृत्वमस्तितत्करभमार्गाकिंनोक्तं॥सत्यमल्पावकाशस्थलेकन्याकरभ्रमाणमभ्यंगीक्रियते॥ तथाचोक्तंदेवयजनदीपिकायां॥स्वल्पाव-
काशनिलयेहीनंमानंसमाश्रयेदिति॥अथनानाविधकर्मणांअंगंकस्मिन्नक्षत्रेकर्तव्यमित्याह॥यस्यांगमिति॥यस्यकर्मणः यत्अंगंअदइदंअंगंअं
गिनोमुख्यस्यगदितंतोउक्तनक्षत्रेकुर्यात्॥ हास्मिन्नंगभूतेकर्मणिइंदोर्बलंनालोक्यंनविचारणीयं॥तत्रविशेषमाह॥ विवाहतः विवाहदिनात्प्राक्
त्र्यरिनवान्हितृतीयषष्ठनवमेन्हिइदंअंगंविवाहांगंनकुर्यात्॥विवाहांगानियथा॥दलनंकंडनंचैवव्यंजनंमोदकानिच॥यवारमंडपोवेदिकुंकुमंवर्णकं

लग्नादष्टिदिनांततःसममुनी७षं५कं९ख्यसूर्ध्वंत्वयुक्घस्त्रेमास्यपिहायनेशरमिताद्वर्षात्परंस्वेच्छया॥

तथेति॥४०॥ ॥अथक्रमप्राप्तंवधूप्रवेशमाह॥ ॥लग्नाद्विवाहतःसकाशात्अष्टिदिनांततः षोडशदिनमध्येसममुनीषंकेषुघस्त्रेषुसमाःसमसं-
ख्याकाःमुनिःसप्तमः इषुपंचमः अंकोनवमःएषुघस्त्रेषुदिवसेषु अतोर्ध्वंषोडशदिनादूर्ध्वंअयुग्घस्त्रेविषमदिनेमास्यपिविषमेहायनेवर्षेवधूसंप्रवेशंजगुरू-
चुः॥एतदुक्तंभवति॥षोडशदिनमध्येसमादिषुदिनेषुकर्तव्यः॥षोडशदिनातिक्रमेमासपर्यंतंविषमदिनेवधूप्रवेशःकार्यः॥प्रथममासातिक्रमेवर्षपर्यंतंविष
मेमासिकर्तव्यस्तदाविषमदिननियमोनास्ति॥एवंप्रथमेवर्षेअतिक्रांतेपंचमवर्षपर्यंतंविषमेवर्षेकर्तव्यःतदाविषममासनियमोनास्ति॥पंचमाद्वर्षात्स

रंविषमवर्षनियमोनास्ति॥ ॥अथविलंबितंवधूप्रवेशंकस्मिन्मासपक्षेकर्तव्यमित्याह॥ वैफामार्गसिते॥वैवैशाखः फाफाल्गुनः मार्गोमार्गशीर्षः॥
एषांसितःशुक्लपक्षस्तस्मिन्॥कैः॥श्रुतियुगोद्वाहर्क्षचित्राश्विनीज्यर्क्षैः॥श्रुतियुगंश्रवणधनिष्ठे॥उद्वाहर्क्षाणिविवाहनक्षत्राणिपूर्वोक्तानि॥चित्राश्वि-
नीप्रसिद्धे॥ईज्यर्क्षंपुष्यः तैः॥अनवमंदिरेजीर्णगृहे॥नवीनमंदिरेकन्यांनवोढांनप्रवेशयेदितिनिषेधादनवमंदिरइत्युक्तं॥उक्तंच॥वधूप्रवेशनंकार्यंपंच
मेसप्तमेदिने॥नवमेवाशुभेवारेसल्लग्नेशशिनोबलइति॥ नारदः॥ आरभ्योद्वाहदिवसात्षष्ठेवाप्यष्टमेदिने॥वधूप्रवेशःसंपत्त्यैदशमेथसमेदिने॥

वैफामार्गसितेजगुःश्रुतियुगोद्वाहर्क्षचित्राश्विनीज्यर्क्षैश्चानवमंदिरेनिशिवधूसंवेशमंगेस्थिरे॥ ४१॥

इति॥संग्रहे॥विवाहमारभ्यवधूप्रवेशोयुग्मेतथाषोडशवासरांतात्॥तदूर्ध्वमध्येयुजिपंचमांतादतःपरस्तान्नियमोनचास्ति॥ वृद्धनारदः॥ समेव-
र्षेसमेमासियदिनारीगृहंविशेत्॥आयुष्यंहरतेभर्तुःसानारीमरणंव्रजेत्॥ भास्करव्यवहारे॥ रात्रौविवाहभेशस्तःसन्मुहूर्तेस्थिरोदये॥वधूप्रवे-
शोनैवात्रप्रतिशुक्राद्ध्यंविदुः॥ऋक्षैर्वैवाहिकैःशुद्धैर्दंपत्योश्चशुभप्रदे॥वधूप्रवेशनंकार्यंपंचमेद्यद्यहस्तंयदि॥मार्गफाल्गुनवैशाखेशुक्लपक्षेशुभेदिने
मूलपुष्यमृदुस्वाती॥स्थिराश्विश्रुतिवासवे॥पितृभेचकरेनारीप्रविष्टापुत्रिणीभवेदिति॥ ४१॥ छ छ छ छ॥

इदानींप्रथमाषाढादौभर्त्रादिगृहेवासनिषेधमाह॥ ॥उद्वाहाद्विवाहादुपरिप्रथमेशुक्रचैत्रौआषाढेकन्यायदिभर्तृगृहेवसेत्तदातज्जननीतस्यभर्तुर्जन-
नींहन्यादित्यादिस्फुगमं॥४२॥ ॥अथपुनर्भूविवाहमाह॥शूद्राःप्रसिद्धाः अंत्याःरजकादयः।तेषुपुनर्भवापरिणयःप्रोक्तः कैःविवाहोक्तभैःस्पष्टं॥
नत्रपुनर्भवापरिणयेतिथिमासवेधगुरुशुक्रास्तादिनआलोक्यंस्पष्टं॥तथाचोक्तंज्योतिर्निबंधे॥नशुक्रास्तादिकंचिंत्यंशुद्धिवेधादिकंतथा॥पुन

उद्वाहात्प्रथमेशुक्रचैत्रेयदिवसेद्भर्तुगृहेकन्यकाहन्यात्तज्जननीक्षयेनिजतनुंज्येष्ठेपतिंज्येष्ठकं॥पौषेचश्वशुरंपतिंचमलिने
चैत्रेस्वपित्रालयेतिष्ठंतीपितरंनिहंतिनभयंतेषामभावेभवेत्॥४२॥शूद्रांत्येषुपुनर्भवापरिणयःप्रोक्तोविवाहोक्तभैर्नालो-
क्यंतिथिमासवेधभृगुजेज्यस्तादितत्रार्कभात्॥त्रित्र्यर्क्षेषुमृतिर्धनंमृतिमृतीपुत्रामृतिर्दुर्भगंश्रीरोगन्नत्यमथोधृतीभे॥११
कृत४तत्त्व२५क्षैत्ययःसाभिजित्॥४३॥

भवासंवरणंनमासतिथिशोधनमिति॥ अथब्रह्मपट्टनक्षत्रशुद्धिमाह॥अर्कभात्सूर्यनक्षत्रात्-
त्रित्र्यर्क्षेषुत्रिषुनक्षत्रेषुक्रमेणमृतिर्मरणंप्रथमेत्रिकेद्वितीयेत्रिकेधनंतृतीयेमृतिः।चतुर्थेमृतिः पंचमेपुत्राः।षष्ठेत्रिकेमृतिःसप्तमेदुर्भगंअष्टमेलक्ष्मीःनवमेत्रिकेओ-
न्नत्यंप्रोक्तं॥अथरुद्रपट्टशुद्धिमाह॥अर्कभादित्यनुवर्तते धृतीशाकृततत्त्वर्क्षे धृतिरष्टादशं ईशाएकादशं कृतश्चतुर्थं तत्त्वंपंचविंशं एतन्मितेनक्षत्रेअर्क-

भादेतन्मितेइत्यर्थः॥ तत्रचतुष्टयेसाभिजिद्गणितेअत्ययोमृत्युः स्यात्। अर्थादन्येषुशुभंप्रोक्तमिति॥ ४३॥ ॥अथनानाविधशास्त्रार्थानाह॥ उपोषित नरः भुक्तायकृतभोजनायैवसुतांदद्यात्। परंउपोषितनरः भुक्तायैवबटवेसावित्रिकांगायत्रींदद्यात्॥ तदुक्तंज्योतिर्निबंधे॥ भुक्त्वासमुद्वहेत्कन्यांसावि- त्रीग्रहणंतथा॥ उपोषितः सुतांदद्यादागतायवरायचेति॥ आरब्धोत्सवकेयदाजनिमृतीस्यातांस्वगोत्रेक्वचित्सांगंतंविदधीतवाजमपरेइति॥ वाजंअन्नं अपरेअसगोत्रिणोविदधीरन्॥ वाजमन्नंगरुद्वाजोवाजंपीयूषमुच्यतेइत्यनेकार्थध्वनिमंजर्यां॥ शेषंसुगमं॥ उक्तंच॥ विवाहोत्सवयज्ञादावारब्धेसूतकं

भुक्तायैवसुतामुपोषितनरोदद्याच्चसावित्रिकामारब्धोत्सवकेयदाजनिमृतीस्यातांस्वगोत्रेक्वचित्। सांगंतंविदधीत वाजमपरेस्मादारभेत्पूर्वतोयज्ञोद्वाहनचौलमौंजिकमहः स्वर्गदिक्त्रित्रिषु॥ ४४॥

यदि। सांगंतत्कर्मकुर्वीतअन्नदानादिकंपरे रिति॥ अस्मादारभेत्पूर्वतोयज्ञोद्वाहनचौलमौंजिकमहः स्वर्गदिक्त्रित्रिषु॥ अस्मान्निश्चितदिनात्पूर्वतः प्रथमतः यज्ञोद्वाहनचौलमौंजिकेत्येतत्- कर्मचतुष्टयंक्रमात्स्वर्ग२१दिक्१०त्रि३त्रिषु३अहःसु आरभेत्। यज्ञएकविंशतिदिनेषु उद्वाहनंविवाहः दिक्षु दशसु दिनेषुचौलंत्रिषुदिनेषुमौंजिकं त्रिषुदिनेष्विति॥ उक्तंच॥ एकविंशत्यहर्यज्ञेविवाहेदशवासराः॥ त्र्यहेचूडोपनयनेनांदीश्राद्धंविधीयते॥ आरंभलक्षणं॥ आरंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः॥ नांदीश्राद्धंविवाहादौश्राद्धेपाकपरिक्रिया॥ ४५॥ ७ ७ ७ ७ ७

क्षयदर्शनैत्यकंश्राद्धं॥ अधीतिंपठणं॥ शीतलाप्सु शीतलोदकेषुआप्लुतिंस्नानंसीमासिंध्वतिपातं॥ सीमाप्रसिद्धा॥ सिंधुर्महानदी॥ सिंधुर्नदीसमुद्रयो
रित्यभिधानात्॥ तयोरतिपातः॥ उल्लंघनं॥ सव्यानिपा (?) अपसव्यमित्येतत्॥ एककुलजाः गोत्रिणः कश्चिन्नोकुर्युः॥ किमवधि॥ मंडपस्यउत्थापावधि
यावन्मंडपोत्थापनंस्यात्तावन्नकुर्यादित्यर्थः॥ ८ कंच॥ दर्शश्राद्धंक्षयश्राद्धंशीताद्भिःस्नानमेवच॥ प्राचीनावीतिकरणंनदीसीमातिपातनं॥ अन्य
च॥ नित्यश्राद्धमधीतिंचस्नानंचशिशिरैर्जलैः॥ सपिंडानैवकुर्वरन्मंडपोत्थापनावधि॥ अथसमंडपोत्थापःकदाकार्यइत्याह॥ सशरागान्होरिति॥

नोश्राद्धंक्षयदर्शनैत्यकमधीतिंशीतलास्वाप्लुतिंसीमासिंध्वतिपातमेककुलजाःसव्यातिपातंकश्चित्॥ उत्थापावधिमंड
पस्यसशरागान्होर्विषमेसमेद्धत्थाप्योनगृहोद्वहोसहजयोस्तुल्याक्रियाब्दांततः॥ ४५॥

शराः पंच॥ अगाः सप्त॥ तस्मिन्मितान्हो
र्दिनयोः पंचमेसप्तमे॥ विषष्ठेसमेषष्ठरहितेसमेन्हिसमदिनेउत्थाप्यः॥ उक्तंच॥ मंडपोत्थापनंकार्यंसमेतुदिवसेबुधैः॥ षष्ठंचविषमंनेष्टंमुक्त्वापंचमस
प्तमौइति॥ अब्दांतर्वर्षमध्येगृहोद्वाहोनकर्तव्यौ॥ सहजयोःएकमातृजयोः पुरुषयोःपुरुषस्त्रियोःसमानक्रियासमानंकर्मनकुर्यादित्यर्थः॥ भिन्नमा
तृजयोर्नदोषइत्यर्थात्सिद्धं॥ अर्थाद्भिन्नमातृजयोस्तथासहोद्वहादिकरणंमागतं तद्भिन्नकर्तृत्वेभिन्नगृहेसतिवेदितव्यं॥ कर्तृत्वमत्रश्राद्धाधिकारि
णःपित्रोरेवनतुविवाहहोमंकर्तुर्वरस्य॥ तथाचोक्तं॥ एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः॥ नसमानक्रियांकुर्यान्मातृभेदेविधीयतइति॥ पुरुषेपुरु

षस्त्रियो पृथक्‌द्वित्वविवक्षयाबहुत्वासंभवान्नबहुत्वं॥यद्वा॥पुरुषश्चस्त्रीचतथातयोर्द्वयोःपुरुषयोस्त्रियोर्वाकन्यापुरुषयोर्विवाहविशेषश्चोक्तः॥सोदर्ययोः
कन्यकयोःकृतयोरेकवत्सरे ॥विवाहोनस्मृतस्तज्ज्ञैःकन्यकाकृतयोःस्मृतइति॥अत्रसंवत्सरमानं॥मनुजमानेनचैत्रादिफाल्गुनांतंवेद्यं॥समानक्रियेतिद्वयो
श्चौलेद्वयोर्व्रतबंधोद्वयोर्विवाहोवासहजयोरित्यनेनैवएकमातृत्वंसंभवति॥उक्तंच॥नैकस्मिन्वत्सरेकार्यौगृहोद्वाहौकदाचन॥४५॥ ॥वर्ज्यांतराण्याह॥

उद्वाहव्रतचूडकेब्दमदलतत्खंडंतिलैस्तर्पणंश्राद्धंपिंडयुतंमहालयगयापित्र्यंविनानाचरेत्‌॥

उद्वाहव्रतचूडकेक्रमेणअब्ददलतत्खंडं॥उद्वाहेविवाहेकृतेसति अब्दंवर्षपर्यंतंव्रतेव्रतबंधेकृतेसतिदलंअब्दार्धंषण्मासपर्यंतमित्यर्थः॥चूडकेचौलकर्म‐
णिकृतेसतितत्खंडंतस्यदलस्यापिखंडंत्रिमासपर्यंतमित्यर्थः॥तिलैस्तर्पणंपिंडयुतंश्राद्धंचनाचरेत्‌॥किंविना॥महालयगया पित्र्यंविना॥महालयंभाद्र‐
पदापरपक्षः॥गयाप्रसिद्धा॥पित्र्यंमाता पितृक्षयदिनं॥तत्रयत्श्राद्धंक्रियतेतन्महालयगयापित्र्यंतद्विना॥उक्तंच॥विवाहव्रतचूडासुवर्षमर्धंतदर्धकं॥अनि

लंतर्पणंकुर्यात्श्राद्धंकुर्यादपिंडकं॥ महालयेगयाश्राद्धेमातापित्रोःक्षयेहनि॥ कृतोद्वाहोपिकुर्वीतपिंडदानंयथाविधीति॥ पूर्वमिति॥ सप्तपदीविधेःपूर्वंप्र
थमतःदोषेअंधमूकादिकेअधिगतेज्ञातेसति॥ वाइत्यथवा॥ वरेमृतेसतिकन्याअन्यत्रदेया॥ अपिचयाकन्याबलाद्विवाहितासापिअन्यत्रदेयातर्हिकथंचे-
द्यदिविद्धयोनिर्नस्यात्॥ विद्धायोनिर्यस्याःसानतथापुरुषभुक्तेत्यर्थः॥ उक्तंचयाज्ञवल्क्येन॥ महादोषेस्कविज्ञातेपूर्वंसप्तपदीविधेः॥ मरणादौसमुत्पन्नेदेया-

पूर्वंसप्तपदीविधेरधिगतेदोषेवरेवामृतेदेयान्यत्रविवाहितापिचबलाद्याविद्धयोनिर्नचेत्॥ ४६॥

न्यस्मैनदोषभाक्॥ बलादुद्वाहिताकन्यादातव्यान्यवरायचेति॥ अन्यच्च॥ बलादुद्वाहिताकन्यामंत्रैर्यदिनसंस्कृता॥ अन्यस्मैविधिवद्देयायथाकन्यातथैवसे-
ति॥ महादोषाःकारिकानिबंधेउक्ताः॥ अंधोमूकःक्रियाहीनश्चापस्मारीनपुंसकः॥ दूरस्थःपतितःकुष्ठीदीर्घरोगीवरोनसत्॥ अन्येपिदोषाउक्ताः॥ मूर्ख-
निर्धनदूरस्थशूरमोक्षाभिलाषिणां॥ त्रिगुणाधिकवर्षाणांनदेयाजातुकन्यकेति॥ पुरुषनपुंसकलक्षणं॥ यस्याप्सुप्लवतेबीजंह्लादिमूत्रंचफेनिलं॥ पुमां-
स्याल्लक्षणैरेतैर्विपरीतैस्तुषंढकः॥ अपरीक्ष्यदानेदोषः॥ अपरीक्ष्यवरंकन्यांनिर्गुणायप्रयच्छति॥ कुलंतस्यैवतच्छोकसंतप्तोविनिकृंततिइति॥ ४६॥ ॥

अथस्त्रीरहितानांविधिमाह॥ अस्त्रीकैःस्त्रीरहितैःविप्रादिभिर्विप्रक्षत्रियविट्शूद्रैः क्रमेणकुशहेमरौप्यरचिताशौल्बीचभार्याधर्मायधार्या॥ अयमर्थः॥ वि
प्रेणकुशरचिताभार्याधर्मायधार्या॥ क्षत्रियेणहेमरचिता॥ वैश्येनरौप्यरचिता॥ शूद्रेणताम्रीनाम्ररचिताभार्याधार्या॥ कथंभूतैर्विप्रादिभिः बुधैः॥ स्वस्वध
र्मनिरतैः॥ वाइत्यथवानिखिलैःसर्वैर्विप्रादिभिःस्वर्णरचिताभार्याधार्या॥ यतस्तयाविनागृहस्थधर्मसाधनंनस्यात्॥ तथाचोक्तं॥ अपत्नीकैस्तुध·

अस्त्रीकैःकुशहेमरौप्यरचिताताम्रीचविप्रादिभिर्भार्यावानिखिलैःस्वर्णरचिताधर्मायधार्याबुधैः॥ मंदा
रार्कदिनेंबुपाग्निफणिभंभद्रातिथिश्चेदेहोद्भूतासाविषकन्यकापितनुगौसौम्यौरिपुक्षेत्रगौ॥ ४७॥ ॥

र्मार्थंकौशीहैमीचराजती॥ ताम्रीविप्रादिभिर्भार्याधार्याहैमीतथाखिलैरिति॥ ॥ अथविषकन्यालक्षणमाह॥ ॥ मंदेति॥ ॥ मंदारार्क
दिने॥ शन्यर्कभौमानामन्यतमस्यवारे॥ अंबुपाग्निफणिभं॥ शततारकाकृत्तिकाश्लेषाणामन्यतमंनक्षत्रं॥ भद्रातिथिर्द्वितीयासप्तमीद्वादशी आसामः
न्यतमाचेत्स्यात् तदायोगःस्यात्॥ इहोद्भूताअत्रयोगेयाकन्याजातासाविषकन्यका॥ ॥ अथयोगांतरमाह॥ ॥ रिपुक्षेत्रगौसौम्यौ·
तनुगौलग्नगतौचेत्स्याताम्॥ ४७॥ ७ ७ ७ ७ ७ ७ ७

एकः क्रूरः रिपुक्षेत्रगः तनुगश्चेत्स्यात्॥ इमौद्वौयोगौइहोद्भवापिविषकन्यकास्यात्॥ ॥अथयोगांतरमाह॥ ॥तनौलग्नेसौरिःशनिःस्या
त्॥रविःसूर्यःपुत्रगःपंचमगःस्यात्॥धरणीसुतोभौमोधर्मस्थोनवमस्थोयदास्यात्तदाअयंअपरोयोगःस्यात्॥तज्जापिकन्याविषंस्यात्॥विषमि
तियथाविषस्वीकारात्मृत्युर्भवतीतिफलंसूचितम्॥तस्मात्सरित्याज्येतिभावः॥ ॥अथमूलजादीनांफलमाह॥मूलेति॥मूलस्यआद्यत्रिपदोद्भवाप्र
थमचरणत्रयेजाताकन्याश्वशुरंहंतिमारयति॥अत्यंत्यत्रयेअहिराश्लेषातस्यअंत्यत्रयंतत्रजाताततस्त्रियंतस्यश्वशुरस्यस्त्रियंश्वश्रूंहंतीत्यर्थः॥ज्ये

एकःक्रूरइहोद्भवोप्यथतनौसौरीरविःपुत्रगोधर्मस्थोधरणीसुतोयमपरोयोगोपितज्जाविषं॥मूलाद्यत्रिपदो
द्भवाश्वशुरमत्यंत्यत्रयेतत्स्त्रियंज्येष्ठांत्येपतिपूर्वजंद्विपचतुर्थेदेवरंहंतिच॥४८॥

ष्ठांत्येज्येष्ठायाःचतुर्थचरणेजातापतिपूर्व·
जंज्येष्ठंहंति॥द्विपचतुर्थेद्वौपौपतीयस्यद्विपंविशाखा तस्यचतुर्थचरणेजातादेवरंहंति॥अर्थादन्यचरणजाशुभा॥४८॥ ॥एवंउक्तनक्षत्रचरणजा·
तोनानरःशुचतेःस्त्रियःश्वशुरादीन्हंति॥ ॥तथाचगर्गः॥मूलजाश्वशुरंहंतीसार्पजाचतदंगनां॥ज्येष्ठजातुपतिंज्येष्ठंदेवरंतुद्विदैवतेति॥तथाचक·
श्यपपटले॥मूलांत्यपादजोश्रेष्ठोतथाश्लेषाद्यपादजो॥द्वीशांत्यपादजोदुष्टोतथाश्लेषांत्यपादजाइति॥अस्यापवादः॥अभावइहनोदोषइति॥अभावे·

तेषांश्वश्रूरादीनांअभावेसतिइहमूलादिजोद्वहनेनोदोषः॥ केचिदाचार्याः तुः नरस्यमौंज्यूर्ध्वंमौंजीबंधनानंतरंतत्फलंनवदंति॥ उक्तंचनारदेन॥ मूलव्यालभवो
दोषोविवाहेयउदाहृतः॥ समौंजीबंधनादूर्ध्वंपुंसांनैवेतिकेचनेति॥ पैत्र्याद्येपिमघायाआद्यचरणेपिमूलवत्फलंस्यादितिकेचिद्वदंति॥ तथाचोक्तंनारदेन॥ पै
त्र्यगंडोद्भवाकन्याश्वशुरघ्नीचकेचनेति॥ ॥अथऋतुत्रयमध्येकिंकिंनकर्तव्यमित्याह॥ नोद्वाहाविति॥ सहजातयोःएकोदरसमुत्पन्नयोःपुत्रयोःक
न्ययोः कन्यापुत्रयोर्वाउद्वाहोविवाहोऋतुत्रयमध्येनकर्तव्यः ऋतवः तेषुनकार्योषण्मासाभ्यंतरेनकार्यावित्यर्थः॥ उक्तंचनारदेन॥ विवाहश्चैकज

एवंनायुवतेरभावइहनोदोषोनुरेतत्फलंमौंज्यूर्ध्वंनवदंतिकेचिदपिपैत्र्याद्येफलंमूलवत्॥ नोद्वाहौसहजातयोस्त्र्यृ
तुषुनोद्वाहाद्व्रतंनोपुंसुद्वाहात्स्युद्वहनंनमंगलविधेर्मुंडंत्रिषुभ्येषुन॥ ४१॥

न्यानांषण्मासाभ्यंतरेयदि॥ असंशयंत्रिभिर्वर्षैस्तत्रैका
विधवाभवेदिति॥ नोद्वाहाद्व्रतमिति॥ उद्वाहात्त्र्यृतुषुव्रतंमौंजीनकार्या॥ तथाचोक्तंनारदेन॥ पुत्रोद्वाहात्परंपुत्रीविवाहोनऋतुत्रये॥ नतयोर्व्रतमुद्वाहा
न्मंगलेनान्यमंगलमिति॥ नोपुंसुद्वाहात्स्त्र्युद्वहनमिति॥ पुंसुद्वाहात्पुरुषविवाहात्त्र्यृतुषुस्त्र्युद्वहनंकन्याविवाहःनोकार्यः॥ तथाचकात्यायनः॥
पुत्रोद्वाहात्परंपुत्रीविवाहोनऋतुत्रयइति॥ नमंगलविधेर्मुंडनमिति॥ मंगलविधेः विवाहात्त्र्यृतुषुमुंडनंचौलंव्रतंवानकार्यम्॥ अत्रकात्यायनः॥

कुलेॠतुत्रयादर्वाक्क्रमंडनमिति॥त्रिशभ्येषुनेति॥एषुअनृतुषुत्रिशफ्भीनकार्या॥त्रयाणांशफ्भानांसमाहारस्त्रिशफ्भी॥मंगलत्रयमितियावत्॥नकुर्यान्मंगल-
त्रयमितिवचनात्॥४९॥नोज्येष्ठाल्लुघ्विति॥ज्येष्ठात्मंगलात्विवाहादेरूर्ध्वमृतुषुलघुमंगलंनोकुर्यात्॥यद्वाहिःशालायामुक्तंतत्ज्येष्ठमंगलं॥अन्यल्लघुमंगलं॥ज्येष्ठलघु
लक्षणंसारसमुच्चये॥ चूडाकेशांतसीमंतविवाहोपनयांस्तुधाः॥गुरुमंगलमित्याहुस्तदन्यल्लघुमंगलमिति॥तन्नकार्यमित्यर्थः॥कस्मादृतेकालॠद्धतःॠ

नोज्येष्ठाल्लघुकालरूढतॠतेकात्यायनोमुंडनंचौलंप्राहनमेखलेत्युभयतःकार्याविवाहादियं॥भेदेब्दस्यनचसंकटेवि
तनुयात्पूर्वोदितंमंगलंवेदाह्वांतरितेदिनव्यवहितेनद्यानगेनाप्यिवा॥५०॥

तेकालेनरूढं॥गर्भाधानपुंसवनादि॥तस्मादृतेतेनविनेत्य-
र्थः॥ तथाचकात्यायनः॥मातृयज्ञक्रियापूर्वंज्येष्ठंकृत्वातुमंगलं॥ॠतुत्रयंपुनर्यावन्नकुर्याल्लघुमंगलं॥लघुवागुरुवाकार्यंकार्यंनैमित्तिकंयदीति॥लघुगु-
रुमंगलयोर्भिन्नकर्तृत्वेनदोषः॥कात्यायनोमुनिःइतिप्राह॥इतीतिकिं॥व्रतंमुंडनंना॥चौलमेवमुंडनं॥ मौंजीविवाहात्उभयतःकार्येति॥तथाचतद्वाक्यं॥मुंडनंचौल
मित्युक्तंव्रतोद्वाहौतुमंगलं॥चौलंमुंडनमेवोक्तंवर्जयेद्वरणात्परं॥मौंजीचोभयतःकार्यायतोमौंजीनमुंडनमिति॥ अथसंकटेप्रवृत्तिमाह॥भेदेब्दस्ये
ति॥संकटेदेशकालभयादौअब्दस्यसंवत्सरस्यभेदेपूर्वोदितंमंगलंवितनुयात्विस्तारयेत्कुर्यादित्यर्थः॥तथाचोक्तंसंहितासारावल्यां॥फाल्गु-

नेचैत्रमासेतुपुत्रोद्वाहोपनायने॥भेदादब्दस्यकुर्वीतनर्क्षत्रयलंघनमिति॥अथवावेदाहांतरितेचतुर्दिनांतरितेकालेमंगलंवितनुयात्॥ तथा-
चस्मृतिसारावल्यां॥पुत्रीपरिणयादूर्ध्वंयावद्दिनचतुष्टयम्॥पुत्र्यंतरस्यकुर्वीतनोद्वाहमितिसूरयइति॥अथवादिनव्यवहितेएकदिनांतरितेकाले
मंगलंकुर्वीत॥ तथाचोक्तं॥ एकोदरप्रसूतानामेकस्मिन्वासरेनरः॥विवाहंनैवकुर्वीतमंडनोपरिमुंडनमिति॥अथवाएकाहेपिनद्यानगेनपर्वतेनअं-
तरितेदेशेमंगलंवितनुयात्॥ज्योतिर्विवरणे॥ एकोदरयोर्वरयोरेकदिनोद्वाहतोभवेन्नाशः॥नद्यंतरएकदिनेकेप्याहुःसंकटेचशुभमिति॥शार्ङ्गधरो-

एकाहेपिजनाश्रयांतरइहेदंतारतम्याद्बुधैर्योज्यंनोयमयोर्निषिद्धमनयोरेकत्रकार्यंजगुः॥नैकस्मैदुहितृद्वयंसहज
योर्नैकोद्भवेकन्यकेदद्यादुद्वहनंमिथोनतनुयात्कुर्यादसंपद्यदः॥५१॥

पि॥नद्यंतरेपिशुभदंपृथक्शैलस्यरोधतइति॥५०॥ एका-
हेपीति॥अथवाएकाहेपिजनांतराश्रयेमंडपांतरेमंगलंवितनुयात्॥मंडपोस्त्रीजनाश्रयइत्यमरः॥उक्तंज्योतिर्विवरणे॥नप्रतिषिद्धंलग्नंसंप्राप्तेसंक-
टेमहति॥एकोदरसंभवयोरेकाहेभिन्नमंडपेकालइति॥अथैषांपक्षाणांनिर्णयमाह॥ इहेदमिति॥इहास्मिन्विवाहादिविषयेइदंभेदेब्दस्येत्या-
द्युक्तं॥बुधैस्तारतम्याद्योज्यं॥संकटानुरूपंयोज्यमित्यर्थः॥अथयमलयोःविशेषमाह॥नोयमयोरिति॥यमयोर्यमलयोःइदंनोनिषिद्धं॥अनयो

र्यमलयोर्मंगलंएकत्रएकवत्सरएकवासरेएकमंडपेकार्यमितिमुनयोजगुः॥ उक्तंच॥एकस्मिन्वत्सरेचैवचवासरेमंडपेतथा॥ कर्तव्यंमंगलंस्वसो
र्भ्रात्रोर्यमलजातयोरिति॥ अथप्रत्युद्वाहनिषेधमाह॥ नैकस्मैइति॥ एकस्मैवरायदुहितृद्वयंएकोद्भवकन्याद्वयंनदद्यात्॥सहजयोःए
कोदरसंभवयोर्भ्रात्रोःएकोद्भवेकन्यकेनदद्यात्॥तथामिथःपरस्परंउद्वहनंनतनुयात्॥अत्रापिसंकटेप्रवृत्तिमाह॥ कुर्यादिति॥ अद्रःनै-
कस्मैइत्याद्युक्तमकर्तव्यं॥असंपदिअन्यवधूवरालाभेसतिकुर्यात्॥ तथाचनारदः॥ प्रत्युद्वाहोनैवकार्योनैकस्मिन्दुहितृद्वयं॥ नचैकज

नोद्वाहंसतिनिश्चयेपिजगदुःपित्रोःसपित्रोःस्त्रियाःसूनोर्भ्रातुरनूढितस्वसुरसूत्क्रांतौपितृव्यस्यच॥

न्ययोःपुंसोरेकजन्येतुकन्यकेइत्यादि॥५१॥ ॥अथप्रतिकूलनिर्णयमाह॥ नोद्वाहमिति॥ निश्चयेपिसतिबुधाःउद्वाहंनजगदुः॥कस्यांस
त्यांपित्रोःअसूत्क्रांतौसत्यां मातापितापितरौ तयोःअसूनांप्राणानांउत्क्रांतिःउत्क्रमणंतस्यांसत्यामित्यर्थः॥कथंभूतयोःपित्रोःसपित्रोः
पितरौचपितरौचपितरःमातुःपितरौ पितुःपितरावित्यर्थः॥तैःसहवर्तमानौसपितरौतयोःसपित्रोःपुनःकस्यांसत्यांस्त्रियाःअसूत्क्रांतौसत्यां
इदंद्वितीयविवाहादौज्ञेयम्॥एवंसूनोःपुत्रस्य भ्रातुःसहजस्य अनूढितस्वसुःअपरिणीतभगिन्याःपितृव्यस्यपितृभ्रातुःअसूत्क्रांतौसत्यां॥

एतदुक्तंभवति॥ पित्रादीनामुक्तानांमध्येअन्यतमेमृतेसतिविवाहंनकुर्यादित्यर्थः॥ तथाचवृद्धशौनकः॥वरवध्वोःपितामातापितृव्यश्चसहोदरः॥एते
षांप्रतिकूलंचेन्महाविघ्नप्रदंभवेत्॥अन्यच्च॥पितापितामहश्चैवमातानैवपितामही॥पितृव्यस्त्रीसुतोभ्राताभगिनीचाविवाहिता॥एभिरेवविपन्नै
श्चप्रतिकूलंबुधैःस्मृतं॥अन्यैरपिविपन्नैस्तुकेचिदूचुर्नतद्भवेदिति॥अथान्येषांमतमाह॥अन्येइति॥अन्येबुधाःस्वान्वयजात्ययेपिस्वकुलजातमर्त्यना
शेपिउद्वाहंनविदधुः॥ तथाचभृगुः॥वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः॥तदोद्वाहोनैवकार्यःस्वपक्षक्षयदोषतइति॥अथसंकटेप्रवृत्तिमाह॥

अन्येस्वान्वयजात्ययेपिजनकांबास्त्रीसुतान्यात्ययेब्दार्धार्धार्धदलांतरेविदधतेहेरंबशांत्याकचित्॥५२॥

जनकांबास्त्रीति॥जनकश्चअंबाचस्त्रीचसुतश्चअन्यश्च॥अन्यःकुलजःप्रतिकूलाधिकारी॥एषांअत्ययोनाशःमरणमितियावत्॥तस्मिन्सति॥अ
ब्दार्धार्धार्धदलांतरेहेरंबशांत्यागणेशशांत्याकचित्संकटेविदधतेबुधाइत्यध्याहारः॥एतदुक्तंभवति॥वरस्यवध्वावापितृनाशेअब्दांतरेवर्षांतरेमातृ
नाशेआर्धांतरेषण्मासांतरे॥स्त्रीनाशेआर्धांतरेत्रिमासांतरे॥एतद्द्वितीयादिविवाहेज्ञेयम्॥तथापुत्रनाशेअर्धांतरेसार्धमासांतरेअन्यनाशेपितृमा
तृस्त्रीस्यादिभ्योन्यस्यकुलस्यनाशेदलांतरेसार्धमासस्यार्धांतरेत्रयोविंशतिदिनांतरेविदधतइत्यर्थः॥५२॥

अन्यमध्येभ्रातुर्विशेषमाह॥ भ्रातुश्चात्मजवदिति॥भ्रातुर्नाशेपुत्रवत्पुत्रनाशोक्तवज्ज्ञेयम्॥सार्धमासांतरेकर्तव्यमित्यर्थः॥ तथाचस्मृतिसारावल्यां॥
पितुरब्दमिहाशौचंतदर्धंमातुरेवच॥मासत्रयंतुभार्यायास्तदर्धंभ्रातृपुत्रयोः॥अन्येषांतुसपिंडानामाशौचंमाससंमितं॥यदातुशांतिकंकृत्वाततोलग्नं
विधीयतइति॥स्मृत्यंतरेप्युक्तं॥संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना॥शांतिरुक्तागणेशस्यकृत्वातांशुभमाचरेत्॥अकृत्वाशांतिकंयस्तुनिषेधेस-
तिदारुणे॥नकरोतिशुभंगर्वात्तद्विघ्नस्तस्यपदेपदेइति॥ ज्योतिःप्रकाशे॥प्रतिकूलेपिकर्तव्योविवाहोमासमंतरात्॥शांतिंविधायगांदत्वावाग्दाना

**भ्रातुश्चात्मजवद्भयेतिसमयेपित्रोर्मृतेःसंशयेनान्येषांप्रतिकूलमामयिविरक्तारात्गतानामपि॥**

द्विवरेप्युनरित्येतत्प्रौढायांकन्यायांपित्रोर्मरणेपिज्ञेयम्॥प्रतिकूलेपिप्रतिकूलाभावमाह॥भयमित्यादि॥भयेदुर्भिक्षराजभयेअतिसमयेअतिकालेपित्रोर्मा-
तापित्रोःमृतेसंशयेसति॥अन्येषांमातृपितृभ्यांअन्येषांमृतानांप्रतिकूलंनास्ति॥ तथाचोक्तंज्योतिःसागरे॥दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये॥
प्रौढायामपिकन्यायांनान्यकूलंप्रतीक्षतइति॥ विशेषांतरमाह॥आमयिविरक्तारात्गतानामपिप्रतिकूलंनास्ति॥आमयीरोगीदीर्घरोगीतियावत्॥विर-
क्तोगृहादिषूदासीनः आराद्गतोदूरगतः देशांतरगतइतियावत्॥आराद्दूरसमीपयोरित्यमरः॥एषामपिमृतानांप्रतिकूलंनास्ति॥ तथाचोक्तंस्मृत्यंतरे

दीर्घरोगाभिभूतस्य दूरदेशास्थितस्य च॥ उदासवर्तिनश्चैवप्रतिकूलं न विद्यत इति॥ अथान्यानपि शास्त्रार्थानाह॥ आतुर्यादिति॥ तुर्यश्चतुर्थः पुरुषः मूल
पुरुषाच्चतुर्थ इत्यर्थः॥ तं मर्यादीकृत्य मृतस्य नरस्य क्रियाया अनभिभवे अभावे सति कश्चित्कारणांतरक्रियायामकृतायां नांदीमुखं नाचरेत्॥ एतत्स्वगोत्र
विषयं॥ तथा च मेधातिथिः॥ प्रेतकर्माण्यनिर्वृत्य चरेन्नाभ्युदयक्रियां॥ आचतुर्थं ततः पुंसि पंचमे तु शुभं भवेदिति॥ नोकुर्यादिति॥ ज्वरितस्य मंगलं नो कुर्या
त्॥ तथा च गर्गः॥ ज्वरस्योत्पादनं यस्य शुभं तस्य न कारयेत्॥ दोषनिर्गमनात्पश्चात्स्वस्थो धर्मं समाचरेदिति॥ भतीति॥ अतिव्याध्युद्भवे कस्यचित्कुलज·

आतुर्यान्मृतनृक्रियानभिभवे नांदीमुखं नाचरेन्नो कुर्याज्ज्वरितस्य मंगलमतिव्याध्युद्भवे निश्चयं॥ ५३॥

स्य शरीरे अतिदारुणज्वरोत्पत्तौ निश्चयं नो कुर्यात्॥ प्रतिकूलभीत्या॥ रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामय इत्यादि वाग्भट्टे॥ ज्वरपर्यायनामानि॥
तथा च गर्गः॥ केचिद्बुर्गृहस्थस्य कस्यचिद्दारुणो ज्वरः॥ तावन्मंगलकार्यं च न कार्यं निश्चितं बुधैरिति॥ ५३॥ अथ महत्संकटे सति वृद्धिसूतकेक·
र्माहतामाह॥ ॥चेत्यादिति॥ उक्तपूर्वसमये यज्ञोद्वाहनचौलमौंजिकमित्यत्रोक्ते पूर्वकाले अनारब्धकार्ये सति कर्मणि अनारब्धे सति संकटे च प्राप्ते स
ति॥ कूष्मांडीघृतहोमतः कूष्मांडिभिर्यद्देवा देवहेडनमित्यादिति सृभिर्ऋग्भिर्घृतहोमः कूष्मांडीघृतहोमः॥ तेन जननाशौचे दशाहांतः जन्मदशाहमध्ये·

कर्मआचरेत्॥ कूष्मांडीघृतहोमंशास्त्रोक्तंसदक्षिणंकृत्वाकर्मकर्तव्यमित्यर्थः॥ तदुक्तंस्मृत्यंतरे॥ संकटेसमनुप्राप्तेसूतकेसमुपागते॥ कूष्मांडिभिर्घृतंहुत्वा
गांदत्वाचपयस्विनीं॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेदिति॥ स्मृत्यंतरे॥ अनारब्धविशुध्यर्थंकूष्मांडैर्जुहुयाद्घृतं॥ गांदद्यात्पंचगव्याशी ततःशुध्यति
सूतकीति॥ ॥अथसिंहेगुरौसतिमंगलनिषेधमाह॥ सिंहेज्यइति॥ सिंहेसिंहराशौईज्यःसिंहेज्यः तस्मिन्सतिशुभंनित्यव्यतिरिक्तंनहितंस्यात्॥
इदंतुपूर्वमेवप्रपंचितं॥ तथाचकालनिर्णये॥ शांतिकंपौष्टिकंयात्राप्रतिष्ठोद्वाहपूर्वकं॥ नकुर्यात्सर्वमांगल्यंसिंहस्थेचबृहस्पतौ॥ ॥तथाचमांडव्यः

चेत्स्यात्सूतकमुक्तपूर्वसमयेनारब्धकार्येबुधः कूष्मांडीघृतहोमतोद्विजननाशौचेक्वचित्कारयेत्॥

इष्टापूर्तंच चौलादिसंस्कारान्वास्तुकर्मच॥ अन्यानिशुभकर्माणिनकुर्यात्सिंहगेगुराविति॥ ॥अथसंकटेप्रवृत्तिमाह॥ ॥हरिलवोर्ध्वमिति॥ क्व
चित्संकटेदेशकालभयादौसिंहेज्येपिहरिलवादूर्ध्वंसिंहांशादूर्ध्वंगौतम्याःदक्षिणतःजान्हव्याउत्तरतःशुभंकर्महितंस्यात्॥ ॥तथाचज्योतिर्निबं
धे॥ सिंहेगुरौसिंहनवांशकोर्ध्वंगोदावरीदक्षिणकूलजातैः॥ उद्वाहकालात्ययदोषभीतैःकार्योविवाहश्चव्रतबंधनीति॥ ॥तथाचगर्गः॥ भागीर
थ्युत्तरेतीरेगोदावर्याश्चदक्षिणे॥ व्रतोद्वाहादिकर्माणिसिंहसंस्थेनदुष्यंतीति॥ अर्थाद्गोदावर्याःउत्तरेभागीरथ्याःदक्षिणेएवंद्वयोर्गोदाजान्हव्योः

र्मध्येसंकटेपिशुभंनआचरेदितिसिद्धं॥ तथाचवसिष्ठः॥ गोदावर्युत्तरेतीरेभागीरथ्याश्चदक्षिणे॥ विवाहादिनकुर्वीतसिंहसंस्थेत्ववाक्पतावि ति॥ अत्रा
प्यतिसंकटेप्रवृत्तिमाह॥ अजेति॥ अस्त्रभीत्यादिषुरजोभयादिषुसत्सुशुभंतः गोदाजान्हव्योर्मध्येहरिलवादूर्ध्वंसिंहेज्येसति॥ अजेमेषे इनेसूर्येसतिशु
भमाचरेत्॥ अजेइनेइत्येतत्विवाहविषयं॥ अस्त्रभीत्यादिष्वित्यनेनपदेनलक्ष्यते॥ तथाचशौनकः॥ मेषस्थेदिवसकरेसिंहस्थेवज्रपाणिसचिवेच॥
यस्याःपरिणयनमसौसाध्वीसुखवसंपदोपेतेति॥ व्रतबंधस्तुमीनगेसूर्येसन्निवेत्रेकर्तव्यइतिग्रंथकृताप्रागेवोक्तं॥ अनिमिषरविमध्येकार्यमिति॥ ॥

सिंहेज्येनशुभंहितंहरिलवोर्ध्वंगोतमीदक्षिणेजान्हव्युत्तरतःक्वचिद्विहितमजेर्केतोस्त्रभीत्यादिषु॥ ५४॥

तथाचमौंजीपटले॥ जन्मभादष्टगेसिंहेनीचेवाशत्रुगेगुरौ॥ मौंजीबंधःशुभःप्रोक्तश्चैत्रेमीनगतेरवौ॥ अथवाइनेईज्येतत्संदंसर्वशुभसाधारणविषयं॥
तथाचशौनकः॥ ॥सिंहस्थेदेवगुरौमेषस्थोयदिभवेत्सहस्रांशुः॥ मंगलकार्यंकुर्यादितिनारदपराशरौवदतइति॥ अस्त्रभीत्यादिष्वित्यत्रादिशब्दे
नवृद्धपितृमरणशंकायांकर्त्रंतराभावाद्यतिसंकटेज्ञेयम्॥ ५४॥ ॥अथनामराशिजन्मराश्योर्निर्णयमाह॥ ॥देशःप्रसिद्धः ग्रामःप्रसि
द्धः॥ गृहंप्रसिद्धं ज्वरःप्रसिद्धः इत्यादिषुनामराशिःप्रधानंस्यात्॥ ॥एतदुक्तंभवति॥ देशग्रामगृहेषुप्रवेशाद्यर्थज्वरेचंद्राद्यवलोकनार्थंव्यवहृ·

मु॰मा॰
५७

तिर्व्यवहारः द्यूतंप्रसिद्धं दानंतुलापुरुषादि॥ एषुचंद्रबलाद्यर्थं॥ मनौमंत्रेमेलनार्थंचंद्रबलाद्यर्थंच॥ सेवाराजादिसेवातत्रमेलाद्यर्थं॥ काकिण्यांकाकिण्यवलो
कनार्थं॥ वर्गशुद्ध्यर्थं॥ संगरेसंग्रामेचंद्रबलाद्यर्थं॥ पुनर्भूमेलकेपुनर्भूमेलनायनामराशिरवलोकनीयेत्यर्थः॥ परतःएभ्योन्यत्रविवाहयात्रादौजन्मर्क्षं
जन्मराशिःप्रधानंस्यात्॥ तथाचज्योतिर्निबंधे॥ देशग्रामेगृहेयुद्धेसेवायांव्यवहारके॥ नामराशेःप्रधानत्वंजन्मराशिंनचिंतयेदिति॥ काकिण्यां
वर्गशुद्धौचदानेद्यूतेज्वरोदये॥ मंत्रेपुनर्भूवरणेनामराशेःप्रधानतेति॥ विवाहेसर्वमांगल्येयात्रादौग्रहगोचरे॥ जन्मराशेःप्रधानत्वंनामराशिंनचिंत॰

देशग्रामगृहज्वरव्यवहृतिद्यूतेषुदानेमनौसेवाकाकिणिवर्गसंगरपुनर्भूमेलकेनामभं॥ जन्मर्क्षंप
रतोवधूपुरुषयोर्जन्मर्क्षमेकस्यचेत्त्वज्ञातंशुद्धिमितोविलोक्यचतयोर्नामर्क्षयोर्मेलकः॥ ५५॥ ॥

येदिति अथवधूवरयोर्मध्येएकस्यजन्मर्क्षंज्ञातंएकस्यनज्ञातंतदाशुद्धिमेलादिकंकथमवलोकनीयमित्याह वधूपुरुषयोरिति॥ वधूपुरुषयोर्मध्येचेद्यदि
एकस्यजन्मर्क्षंज्ञातंएकस्यनज्ञातंनदाऽज्ञानाज्जन्मर्क्षादेकस्यशुद्धिंगुर्वादिशुद्धिंविलोक्यतयोर्वधूवरयोर्नामर्क्षयोर्मेलकोवर्णवश्यादिकः पूर्वोक्तो
विलोक्यः॥ अर्थाद्द्वयोराश्यज्ञानेनामर्क्षादिवसर्वंविलोक्यं॥ तथाचशार्ङ्गधरः॥ विवाहघटनंचैवलग्नजंग्रहजंबलं॥ नामभाच्चिंतयेत्सर्वंजन्मनज्ञायतेयदि ति
५५

टी॰

५७

अथमेढकार्थंनाम्नोनक्षत्रज्ञानमाह॥ ॥नामादिमवर्णोनामाद्यक्षरंतस्मात् अवकहडंशतपदंचक्रंयस्मात्चक्रात् चूचेचोलापदेषाद्येइत्यादयः श्लोकानि
चन्द्रास्तस्मात्चक्रात् भंनक्षत्रंज्ञेयं॥ तद्यथा॥ चूडामणीतिनाम्नः आद्यक्षरात्चकारात्॥ चूचेचोलाइत्यादिनाअश्विनीनक्षत्रंतत्रप्रथमचरणइतिवत्
ज्ञेयंइत्यर्थः॥ तथाचदीपिकायां॥जन्मनज्ञायतेयेषांतेषांनामगवेष्यते॥ चक्रेवकहडेभांशौतन्नाडीकैश्चिदग्निभादिति॥तन्नाडीत्यस्यार्थः॥यदा
नाम्नोनक्षत्रंगवेष्यतेतदाअग्निभात्कृत्तिकानक्षत्रात्नाडीविलोक्येतिकैश्चिदुक्तं॥कैश्चिदितितन्मतमग्राह्यं॥तस्मादश्विन्यादित्रिकंव्यस्तमिति

भंनामादिमवर्णतोवकहडाद्युज्यादिवर्णाद्ब्दवोतुल्यावत्रशसौरवषौयदभिधाबह्वोस्यनामांतिमं॥

न्यायेननाड्यवलोकनंबहुसंमतमितिभावः॥अथनामादौसंयोगाक्षरेसतिकिंकर्तव्यमित्यपेक्षायामाह॥युज्यादिवर्णादिति॥युजियुक्तेऽक्षरेसंयुक्ताक्ष
रेप्रद्युम्नेत्यादिकेनामादौयुक्ताक्षरेसतिआदिवर्णात्प्रथमवर्णात्भंज्ञेयं॥यथाप्रद्युम्नेनाम्निप्रथमवर्णःप्रस्तत्राद्यःपकारस्तस्मात्भंज्ञेयमित्यर्थः॥प्रि
यव्रतेत्यादौपिकारएव॥ढुपदेत्यादौदुकारएवग्राह्यइत्यादि॥स्वरशास्त्रे॥संयोगाक्षरजेनाम्निज्ञेयंतत्रादिमाक्षरमिति॥अथअवकहडचक्रेनामाद्यक्षरा
भावेसतिकिंकर्तव्यमित्यपेक्षयाआह॥बवौतुल्यावत्रशसौरवषाविति॥अत्रावकहडचक्रेबवौइतिइमौवर्णौतुल्यौ॥तथाचरवषौ॥शिवइतिनाम्निसतिअ·

वकहडेचक्रेशकारस्याभावात्शकारस्थानेसकारांगीकारान्भंज्ञेयमितिभावः॥एवमेवशसौतथाखषौपरस्परवर्णौज्ञात्वाभंज्ञेयम्॥ तथाचस्वरशास्त्रे॥
खषौशसौवबौचैवज्ञेयावितिपरस्परमिति॥ अन्यच्च॥ नप्रोक्ताङञणावर्णानामादौसंतितेनहि॥ चेद्भवंतितथाज्ञेयागजडास्तेयथाक्रममिति॥ चक्रंशतप
दंवक्ष्येऋक्षांशाक्षरसंभवमितिस्वरशास्त्रोक्तमवकहडचक्रंप्रसिद्धं॥अथयस्यबहूनिनामानिसंतितस्य कस्मान्नाम्नोर्भंज्ञेयमित्याकांक्षयाआह॥ य॰
दभिधाबह्व्योस्यनामांतिममिति॥यस्यअभिधानामानिबह्व्योभवंतितस्यांतिमंपश्चाद्भवंनामग्राह्यं॥ तथाचस्वरशास्त्रे॥ बहूनियस्यनामानिनर॰

आर्यानृद्वहनेजन्तुर्भममलंपट्टस्यबंधेजगुर्गेहग्रामनृपाभिषेककृषिमौंज्यन्नाशनेभूषणे॥५६॥

स्यस्युःकथंचन॥तस्यपश्चाद्भवंनामग्राह्यंस्वरविशारदैरिति॥अथजन्मनक्षत्रंयेषुयेषुशस्तंतान्याह॥ आर्याइति॥ नृद्वहनेपुरुषविवाहेजन्तुर्भंज॰
न्मनक्षत्रंअमलंनिर्दूषणंजगुः॥तथापट्टस्यबंधेपदबंधने॥गेहंगृहकरणप्रवेशनं॥तथाग्रामोग्रामवरप्रवेशनं॥नृपाभिषेकोराजाभिषेकः॥ कृषिःप्र
सिद्धा॥मौंजीप्रसिद्धा॥अन्नाशनंनवान्नप्राशनं॥भूषणंभूषणधारणं॥एषांसमाहारस्तस्मिन्जन्मभंशुभदंजगुः॥ तथाचज्योतिःप्रकाशे॥जन्मभंकृ
षिनृपाभिषेचनेभूषणेनगरगेहकर्मणि॥आधिपत्यभुविमौंजिबंधनेपुंविवाहउदितंशुभंबुधैरिति॥राजमार्तंडे॥वसंतसमयेदद्यादब्देगर्भाष्टमेष्टमे॥मेखलं

जन्ममासेपिजन्मभेचतिथावपीति॥ ॥नारदः॥ पट्टबंधनचौलान्नप्राशनेचोपनायने॥शुभदंजन्मनक्षत्रमशुभंत्वन्यकर्मणीति॥५६॥ ॥इतिश्री
कृतमुहूर्तमार्तंडटीकायांमार्तंडवल्लभायांविवाहप्रकरणंसमाप्तं॥ ❦ ❦ ❦ ❦ ❦ ❦ ❦
अथाग्न्याधानंवृत्तेनैकेनाह॥ ॥अग्नेराधानंबहुभिर्बुधैर्दारकालेअवादिकथितं॥चतुर्थीकर्मानंतरंदारकालः परैराचार्यैर्दायाद्यकालेधनविभा
गकालेअवादि॥तथाचवृत्तशते॥अग्न्याधानंदायकालेविधेयंकैश्चित्प्रोक्तंतच्चदायाद्यकालेइति॥ तथाचकात्यायनगृह्ये॥आवसथ्याधानंदा

अग्न्याधानमवादिदारसमयेदायाद्यकालेपरैर्हीशाग्निध्रुवशाक्रपूषभमृगेज्यैर्व्यब्जलग्नांशयोः॥

रकाले दायाद्यकालेएकेषामिति॥एतद्भाष्यकारैरेवंव्यवस्थापितं॥अभ्रातृमतोदारकालेभ्रातृमतोदायाद्यकालेप्रोक्तमिति॥स्मृतिषुकृतदारस्याग्निना
विनाबहुदोषोदृश्यते॥तथाहि॥कृतदारोनैवतिष्ठेत्क्षणमप्यग्निनाविना॥तिष्ठन्सचेद्द्विजोव्रात्यस्तथाचपतितोभवेत्॥पितृपाकोपजीवीस्याद्भ्रातृपा
कोपजीवकः॥ज्ञानाध्ययननिष्ठोवानदुष्येताग्निनाविना॥योनाग्निमुपसेवेतदारान्कामाहृतावपि॥पारदारीसविज्ञेयःस्वस्त्रीस्वीकरणादपि॥यथा
स्नानंयथासंध्यावेदस्याध्ययनंयथा॥तथैवोपासनंदृष्टंनास्थितिस्तद्वियोगतइत्यादि॥तस्मात्सूत्रकारैःकात्यायनादिभिःदारकालएववाहुल्येनोक्तं॥

अग्न्याधाननक्षत्राण्याह॥ कें॰ द्वीशाग्निध्रुवशाक्रपुष्यमृगपौष्णैः द्वीशं विशाखा अग्निः कृत्तिका ध्रुवाणि त्र्युत्तरा रोहिण्यः शाक्रं ज्येष्ठा पुष्यमृगौ प्रसिद्धौ पौष्णं रेवती तैः कयोः व्यब्जलग्नांशयोः विगताः अब्जाः याभ्यां तौ व्यब्जौ तौ च तौ लग्नांशौ च तयोः अब्जा जलचरराशयः मकरस्य पश्चिमार्धं कुंभो मीनः कर्कटश्चैते जलचरराशयः चंद्रोपि जलजः एतैः रहितयोः लग्ननवांशयोरित्यर्थः॥ तथा च वृत्तशते॥ कर्किनक्रघटमीनविलग्ने वांशके तनुगते थ तदीये। लग्नगे कुमुदिनीदयिते वा नाशमेनि जनितोपि हुताशः इति॥ कें॰ जीवेंदुर्ककुजैः कृतधिकेंद्रगुरुस्थैः जीवो गुरुः इंदुश्चंद्रः अर्कः सूर्यः कुजो भौमः तैः कृतः पंचमं केंद्रत्रय उपचयभवनानि॥ गुरुर्न-

जीवेंदर्ककुजैः कृत ५ द्वि ३।६।११।१ गुरु९ केंद्र१।४।७।१० स्थैरनस्तंगतैः स्वोच्चेष्टर्क्षगतैः परैरुपचयैर्वित्ताद्यशस्तो बुधैः॥१॥

वमं केंद्राणि प्रथमचतुर्थसप्तदशमानि ५।३।६।११।१०।९।१।४।७।१० एतत्स्थानगतैः कथंभूतैरनस्तंगतैः सूर्यकिरणैरलुप्तैः॥ पुनः कथंभूतैः। स्वोच्चेष्टर्क्षगतैः स्वश्च उच्चानि च इष्टाश्च एषां ऋक्षाणि राशयस्तद्गतैः स्वराश्युच्चराशिमित्रराशिगतैरित्यर्थः॥ परैरुक्तेभ्योन्यैर्ग्रहैः उपचयैः त्रिषडेकादशदशमगैः कस्यां सत्यां वित्ताद्यशस्तौ सत्यां वित्तं द्वितीयं आद्यं लग्नं तयोः शस्तिः क्रूरराहित्यं तस्यां सत्यां शेषं पूर्ववत् प्रायश्चंद्रमित्युक्तमवलोक्यं॥ तथा च वृत्तशते॥ केंद्रर्क्षो-पचयत्रिकोणभगताः सूर्यारजीवेंदवः शेषाश्चोपशयस्थिता यदि तदाग्न्याधानमुक्तं शुभं॥ चंद्रेनेधनगे म्रियेत युवती भौमे पुमानष्टमे शेषैर्मृत्युगतैरुजा

चसहितोग्न्याधानकर्ताभवेत्॥ नोकुर्याक्षतभुक्परिग्रहमिहक्ष्मापुत्रजीवेंदुभिर्नीचस्थैर्विजितैरिपोर्भवनगैरस्तंगतैर्वाद्विजइति॥ तथाचसंहिता-
सारे॥ अग्न्याधानंनकुर्वीतकर्किनक्षत्रयेविधौ॥लग्नगेधनगेपापेतथारंध्रग्रहान्विनइति॥१॥ इतिमुहूर्तमार्तंडटीकायांमार्तंडवल्लभायां
अग्न्याधानप्रकरणंसमाप्तं॥ ७ ७ ७ ७ ७ ७ ७ ७

अथगृहप्रकरणंविवक्षुस्तावद्ग्रामविचारमाह॥ नामर्क्षान्नामराशेःसकाशात्द्वि२सुतां५करदिक्भवगतोग्रामःशुभः स्यात्।अन्यउक्तविपरी-

नामर्क्षाद्विसुतांकदिग्भव२।५।९।१० गतोग्रामाशुभोन्योन्यथातत्कोणेंत्यक्षुवांशुभंनिवसतांदोषाःपरेषामलं

तोग्रामः अन्यथास्यादशुभः स्यादित्यर्थः॥ तदुक्तंज्योतिःसागरे॥ एकभेसप्तमेग्रामेवैरंहानिस्त्रिषष्ठगे॥तुर्याष्टद्वादशेरोगःशेषस्थानेसुखंभ
वेदिति॥एवंग्रामंशुभाशुभमभिधा येदानींग्रामदिङ्नियममाह॥ तत्कोणइति॥ तत्कोणेतस्यग्रामस्यकोणेअंत्यक्षुवांरजकचर्मकारादीनांनि
वसतांवसतिंकुर्वतांशुभंस्यात्॥रजकश्चर्मकश्चैवनटोबुरुडएवच॥कैवर्तमेदभिल्लाश्चसप्तैतेअंत्य ःस्मृताः॥इत्यादीनांग्रामकोणेशुभंस्यादित्य-
र्थः॥तत्कोणेनिवसतांपरेषांवर्णानांअलंअत्यर्थंदोषाःस्युःअशुभानिस्युरित्यर्थः॥तथाचज्योतिर्निबंधे॥भवनपुरग्रामाणांयेकोणास्तेषुनिवसतांदोषः

मु॰ मा॰
६०

श्वपचादयोंत्यजाद्यास्तेषेवविवृद्धिमायांति॥एवंजातीनांशुभाशुभादिग्विभागमुक्त्वाराशिपरत्वेनदिक्षुवसतिमाह॥कन्येति॥यमाशादितःदक्षिणस्याःस
काशात्क्रमेणाष्टासुदिक्षुकन्याकर्किधनुस्तुलादयोराशयोन्यवसंति॥अन्येउर्वरितामध्येन्यवसंति॥ एतदुक्तंभवति॥अभीष्टंग्रामंनवभागंपरिकल्प्य
मध्यभागाद्दक्षिणभागेकन्यान्यवसति॥कन्याराशिनादक्षिणभागेगृहंनकार्यमित्यर्थः॥तथैवनैर्ऋतेकर्कटः॥पश्चिमेधनुः॥वायव्येतु ला॥उत्तरेअजो
मेषः ईशान्यांघटःकुंभः पूर्वेकोर्पिर्वृश्चिकः आग्नेयेअंत्योमीनः न्यवसति अन्येवृषमिथुनसिंहमकरामध्यभागेन्यवसंति॥एवंराशिपरत्वेनदिङ् नियम

**कन्याकर्किधनुस्तुलाक्रियघटाः कौर्प्यांडजौयाम्यतोमध्येन्येन्यवसंत्यथेंद्रककुभोवर्गाःस्युरोजस्विनः॥१॥**

मुक्त्वाइदानींवर्गपरत्वेनदिङ्नियममाह॥ अथेति॥इंद्रककुभःसकाशात् अष्टसुदिक्षुअप्रमुखाःअष्टौवर्गाःअकचटतपयशाः इत्येतेप्रसिद्धाःओ
जस्विनोबलवंतःस्युरित्युत्तरश्लोकेनान्वयः॥१॥ अष्टाविति॥ एतदुक्तंभवति॥अआइईउऊइत्यादिकःषोडशाक्षरोवर्गः पूर्वस्यांबली कादिकः
पंचाक्षरोआग्नेयां चादिकोदक्षिणस्यां टादिकोनैर्ऋत्यां तादिकःपश्चिमस्यां पादिकोवायव्यां यादिकउत्तरस्यां शादिकईशान्यांबली अयमर्थः॥
स्वनामादिमाक्षरात् वर्गंज्ञात्वास्वस्थानेगृहंकार्यमितिभावः यतः स्वस्वस्थानेप्राणिनोबलवंतइतिलोकेप्रसिद्धं किंलक्षणावर्गाःस्वपंचमपराः स्वेभ्यःपं

टी॰

६०

चपराः वैरिणो येषां ते तथा ॥ यथा अवर्गस्य पंचमस्तवर्गः सौम्यवैरी कवर्गस्य पंचमः पवर्गः सौम्यवैरी एवं सर्वेषां वर्गाणां वैरिणो ज्ञातव्याः वैरत्वं हि स्वामिवशेन ॥ तदुक्तं भूपालवल्लभे ॥ वर्गेशास्तार्क्ष्यमार्जारसिंहश्वासर्पमूषकाः ॥ इभेणौ पूर्वतस्तेषां स्ववर्गात्पंचमो रिपुरिति ॥ तस्मात्स्ववैरिवर्गस्य दिशि गृहं न कार्य-मिति भावः ॥ अर्थादन्यत्र मध्यमं तत्रापि स्वदिग्वर्गासन्नं शुभं । वैरिदिगासन्नमशुभमिति बुध्या ज्ञेयम् ॥ एवं स्ववर्गग्रामवर्गयोर्मित्रारित्वमवलोक्य वासः कर्तव्य इति सिद्धं ॥ तत्र राशिघटितवर्गघटितयोर्मध्ये राशिघटितं बलवत् ॥ तदुक्तं ज्योतिःसागरे ॥ केप्याहुरथ वर्गाणां स्वस्थाने गृहमिति ॥ ॥ अथ वर्गघटि

अष्टावमसुखाः स्वपंचमपराद्विघ्नः स्ववर्गोन्ययुक्तष्टः काकिणिका गजैर्मिथ इमा यस्याधिकाः सोर्थदः ॥

ते काकिणिका आह ॥ द्विघ्न इति ॥ स्ववर्गो ग्रामवर्गः वसतिं कर्तुर्वर्गश्च द्विघ्नः द्विगुणितः कार्यः मिथ अन्ययुक् अन्यवर्गयुक्कार्यः ॥ गजैरष्टभिस्तष्टः शेषितः सन् काकिणिकाः स्युः इमाः काकिणिकाः यस्य अधिकाः सोर्थदो धनदाता स्यात् ॥ एवं ग्रामदिङ्नियममुक्त्वा इदानीं निर्माणे पत्तनग्रामक्षेत्रादीनां समंततः क्षेत्रमादौ परीक्षेत गंधवर्णरसपूर्वैरित्युक्तत्वात् ॥ तावद्वर्णपरत्वेन भूमेर्वर्णरसगंधान्वृत्तार्धेनाह ॥ श्वेतेति ॥ श्वेतारक्तपीतकृष्णवसुधाः विप्रतः ब्राह्मणात्सकाशा-त् वर्णानां शुभाः शोभनाः स्युः श्वेतवसुधा पृथ्वी ब्राह्मणस्य आरक्तवसुधा क्षत्रियस्य पीतवसुधा वैश्यस्य कृष्णवसुधा शूद्रस्य शोभनेति ॥ अर्थात् मिश्र

जातीनांमिश्राशोभना॥ तथाचवसिष्ठः॥ श्वेताशस्ताद्विजेंद्राणांरक्ताभूमिर्महीभुजां॥ विशांपीताचशूद्राणांकृष्णान्येषांचमिश्रितेति॥ एवंवर्णमुक्त्वाइ-
दानींरसमाह॥ स्वादुरिति॥ स्वादुर्मधुरावसुधाब्राह्मणस्यशोभना॥ कटुर्मरिचरसाक्षत्रियस्यतिक्तकानिंबरसावैश्यस्य॥ कषायाहरीतकीरसाशूद्रस्य
शोभनेत्ति॥ अर्थान्मिश्राणांमिश्राशोभना॥ तथाचनारदः॥ मधुरंकटुकंतिक्तंकषायश्चरसाःक्रमात्॥ एवंरसानुक्त्वागंधानाह॥ घृतेति॥

श्वेतारक्तकपीतकृष्णावसुधास्वादुःकटुस्तिक्तकाकाषायाघृतशोणितान्नमदिरागंधाःशुभाविप्रतः॥२॥

घृतगंधाब्राह्मणस्य॥ शोणितगंधारक्तगंधाक्षत्रियस्य॥ अन्नगंधावैश्यस्य॥ मदिरागंधामद्यगंधाशूद्रस्य॥ मिश्राणांमिश्रगंधाशुभेत्यर्थः॥ तथा-
चोक्तंकारिकायां॥ घृतासृगन्नमदिरागंधाचक्रमशोभवेदिति॥ नानाग्रंथेषुरसगंधानांनानात्वं॥ तद्विकल्पनोग्राह्यं॥ तथाचनारदः॥ मधुपेरान्नपि-
शितगंधवर्णानुपूर्वकं॥ मधुरंकटुकंतिक्तंकषायश्चरसाःक्रमात्॥ पेरगंधाकषायगंधा॥ अन्यत्स्फुगमं॥ तथाचकारिकायां॥ घृतासृगन्नमद्यानांगंधा-
चक्रमशोभवेत्॥ मधुरास्यात्कषायाम्लकटुकावानुपूर्वशइति॥ २॥ ७ ७ ७ ७ ७

एवंपृथ्वीवर्णादिकमभिधायइदानींवर्णपरत्वेनभूप्लवत्वमाह॥ सौम्यादिषुउत्तरादिषुदिक्षुप्लवो निम्नत्वंयस्यतस्यतच्चतद्भूतलंचतस्मिन्विप्रादि
को ब्राह्मणादिकः गृहंविरचयेत्॥ एवंवर्णपरत्वेनभूप्लवत्वमुक्त्वाब्राह्मणस्यविशेषमाह॥ अग्र्योऽखिलइति॥ अग्र्योब्राह्मणः अखिलेसर्वप्लवेगृहंविरचये-
त्॥ तथाचभृगुः॥ उदकादिप्लवमिष्टंविप्रादीनांप्रदक्षिणेनैव॥ विप्रः सर्वत्रवसेद्वर्णमथेष्टमन्येषामिति॥ अथपक्षांतरमाह॥ यत्रेतिनिखिलाःसर्ववर्णा
स्तत्रगृहंकुर्युः॥ तत्रकुत्रयत्रभुविहृत् अंतःकरणंस्थिरंस्यात्॥ अयमर्थः॥ यस्यांभूमौअंतःकरणप्राशस्त्यंस्यात्॥ तत्रैवगृहंकर्तव्यमित्यर्थः॥ तथा-

**सौम्यादिप्लवभूतलेविरचयेद्विप्रादिकोऽग्र्योऽखिलेनान्येषांनियमोऽथयत्रनिखिलाःकुर्युर्गृहंहृत्स्थिरं॥**

त्रवास्तुशास्त्रे॥ मनसश्चक्षुषोर्यत्रसंतोषोजायतेभुवि॥ तस्यांकार्यंगृहंसर्वैरितिगर्गादिसंमतमिति॥ ॥अथशल्यज्ञानंवृत्तार्धेनाह॥ सद्मप्र-
श्नेति॥ सद्मप्रश्नकृतः अत्रगृहंकर्तव्यमित्यादि॥ गृहप्रश्नकर्तुर्मुखाच्चेद्यदिप्रथमतःवर्गादिवर्णोऽक्रमः स्यात्॥ वर्गाणांप्रथमाक्षरोदयःस्यात्॥ अकच
टतपयशानामन्यतमाक्षरोक्रमःस्यात्तदाशल्यंतद्दिग्गतंतस्यवर्गस्यदिग्गतंसुधीः आदिशेत्॥ शल्यमत्रास्तीतिकथयेदित्यर्थः॥ एतदुक्तंभवति॥ गृह
संमितांभूमिंदक्षिणोत्तररेखाभिः समतयानवधाकृत्वावर्गाद्यक्षरैः॥ अकचटतपयशैरष्टभिःक्रमेणाष्टासुपूर्वादिदिक्षुशल्यमादिशेत्॥ अकारेप्रश्नाद्य

क्षरेसतिपूर्वस्यांदिशिशल्यमादिशेत्॥ककारेआग्नेय्यां॥चकारेदक्षिणस्यां॥इत्याद्यष्टसुदिक्षु॥अष्टभिरक्षरैरादिशोदित्यर्थः॥तुपुनः॥हपये स्त्रिभि
रक्षरैर्मध्यतोमध्यकोष्ठेशल्यमादिशेत्॥हपयानांत्रयाणांअक्षराणांअन्यतमेप्रश्नाद्यक्षरेसतिमध्येशल्यमादिशेदित्यर्थः॥ तथाचोक्तंज्योतिर्निबंधे॥
स्मृत्वेष्टदेवतांप्रष्टुर्वचनस्याद्यमक्षरं॥गृहीत्वातुततःशल्याशल्यंसम्यग्विचार्यते॥अकचटतपयशाहपयावर्णाःपूर्वादिमध्यांताःशल्यकराःइहना॰
न्ये॥शल्यगृहेनिवसतांनाशइतिएतदेवस्पष्टंतत्रैवोक्तं॥स्वच्छयायदिअःप्राच्यांनरशल्यंतदाभवेत्॥सार्धहस्तप्रमाणेनतच्चमानुषमृत्युकृत्॥

सद्मप्रश्नकृतोमुखात्प्रथमतोवर्गादिवर्णोद्गमश्चेत्तद्दिग्गतमादिशेत्तुहपयैःशल्यंसुधीर्मध्यतः॥३॥

आग्नेयांदिशिकःप्रश्नेखरशल्यंकरहृये॥राजदंडोभवेत्तत्रभयंनैवनिवर्तते॥याम्यायांदिशिचःप्रश्नेकुर्यादाकटिसंस्थितं॥नरशल्यंगृहेशस्यमरणं॰
चिररोगतः॥नैर्ऋत्यांदिशिटःप्रश्नेसार्धहस्तादधस्थले॥श्वनोस्थिजायतेतत्रबालानांजनयेन्मृतिं॥तःप्रश्नेपश्चिमायांतुशिशोःशल्यंप्रजायते॥सा
र्धहस्तेगृहस्वामीनतिष्ठतिसदागृहे॥वायव्यांदिशिपःप्रश्नेतुषांगाराश्चतुःकरे॥कुर्वंतिमित्रनाशंचदुःस्वप्नदर्शनंतदा॥उदीच्यांदिशियःप्रश्नेविप्र
शल्यंकटेरटः॥तच्छीघ्रंनिर्धनत्वायकुबेरसदृशस्यहि॥ईशान्यांदिशिशःप्रश्नेगोशल्यंसार्धहस्ततः॥तद्गोधनस्यनाशायजायतेगृहमेधिनः॥हपयामध्यमेको॰

ष्ठोवक्षोमात्रे भवेदधः॥ नृकपालमथो भस्म लोहं तत्कुलनाशकृदिति॥ ९॥ ॥ ३॥ एवं शल्यमभिधायेदानीं स्थलस्य शुभाशुभज्ञानस्योपायमाह॥ ॥ श्व-
भ्रं गर्तं हस्तमितं खनेत्॥ इहास्मिन् श्वभ्रे निशास्ये रात्रिमुखे अर्धसूर्यास्ते जलं पूर्णं न्यसेत्॥ तच्चेद्यदि प्रातः सजलं स्यात् तदा तत्स्थलं सत् शुभं स्यात्॥
वृद्धिकरं स्यात्॥ यदि अजलं गतजलं स्यात् तदा मध्यमं॥ यदा स्फाटितं स्फुटितं स्यात्तदा असत्॥ नानाविधहानिकरं स्यादित्यर्थः॥ तथा च नारदः॥

श्वभ्रं हस्तमितं खनेदिह जलं पूर्णं निशास्ये न्यसेत्प्रातर्दृष्टजलं स्थलं सदजलं मध्यं त्वसत्स्फाटितम्॥

तथा निशादौ तत्खात्वा पानीयेन प्रपूरयेत्॥ प्रातर्दृष्टे जले वृद्धिं समं पंके व्रणे क्षय इति॥ ॥ एवं शुभाशुभस्थललक्षणमभिधायेदानीं भूमि
शोधनमाह॥ ॥ ज्ञात्वेति॥ एवमुक्तप्रकारैः स्थानं ज्ञात्वा गृहाधिकभुवं जलान्तं यथा भवति तथा खनेत्॥ गृहाद्दधिका गृहाधिका सा चासौ भूश्च त-
थातां कल्पितगृहात् किंचिदधिकां भूमिं जलपर्यंतं खनेदित्यर्थः॥ अधिकखननं शुद्धभूभागे भित्तिखननार्थं॥ वा इत्यथवा स्तरो यावत्तावत्खनेत्॥ पृथ्वी-

गर्भेमृद्वेदानांस्तराःसंति॥ तत्रान्यस्तरपर्यंतंखनेदित्यर्थः॥ अथवायावत्पुरुषस्तन्मितंवापुरुषमात्रंखनेत्॥ इदंशक्त्यपेक्षयाज्ञातव्यम्॥ पुरुषप्रमाणंपंचा
रत्नयः॥ ॥तथाचशुल्बं॥ ॥पंचारत्निर्दशवितस्तिर्विंशतिशतांगुलःपुरुषइति॥ पंचारत्न्यादयःपुरुषपर्यायाःकिंकृत्वा॥ नत्वानमस्कृत्यखनेदित्य
र्थः॥ ततस्तदनंतरंतत्खातंकपिशिरस्तुल्याश्मभिःवानरशिरःप्रमाणैःग्रावाणैःपूरयेत्पूर्णंकुर्यात् ॥तथाचमांडव्यः॥ ॥जलांतंप्रस्तरांतंवापुरु

ज्ञात्वैवंनिखनेत्गृहाधिकभुवंनत्वाजलांतंस्तरोयावद्वापुरुषस्ततः कपिशिरःस्तुल्याश्मभिःपूरयेत्॥ ४॥

षांतमथापिवा॥ क्षेत्रंसंशोध्यचोद्धृत्यशल्यंसदनमारभेदिति॥ ॥तथाचमत्स्यपुराणे॥ कपिशीर्षप्रमाणैश्चग्रावाणैःपूरयेद्दृढं॥ खातं
तत्रसमंकृत्वाततःप्राचीप्रसाधयेदिति खन्यमानेक्षेत्रेयदाप्यतेतस्यफलंकारिकायामुक्तं॥ खन्यमानेयदाक्षेत्रेपाषाणःप्राप्यतेयदा॥ ध॰
नायुश्चिरतातस्यस्यादिष्टकास्मधनागमः॥ कपालांगारकेशादौव्याधिनापीडितोभवेदिति॥ ४॥

एवंस्थलशुद्धिमभिधायाधुनादिक्साधनमाह॥ ॥उज्जयिनीस्थलात् यमदिशि दक्षिणस्यां दिशि त्वाष्ट्रानिलाभ्यंतरात् प्राक्साध्या॥ नरैरित्यध्याहारः॥
त्वाष्ट्रं चित्रा। अनिलं स्वाती। अनयोरंतरं मध्यं तस्मात्प्राचीसाध्येत्यर्थः॥ एतदुक्तं भवति॥ संभवे सति रात्रौ प्राङ्मुख उपविश्य युगमात्रोदितां चित्रां न-
लिकया विलोकयन् नलिकाग्राल्लंबं भूमिपर्यंतमुक्त्वा भूमौ चिन्हं कृत्वा तथैवान्वलस्तेनैव नेत्रेण स्वातिमवलोकयन्। तथैव नलिकाग्रात् सकाशाल्लं-
बं भूमिपर्यंतमुक्त्वा लंबपाते चिन्हं कृत्वा नेत्राल्लंबमुक्त्वा तथैव चिन्हं कुर्यात्॥ एवं चिन्हद्वयं चित्रास्वाती चिन्हयो रज्जुं तन्मितां धृत्वा रज्जुप्रांतौ एकीकृत्य म

प्राक्साध्योज्जयनीस्थलाद्यमदिशि त्वाष्ट्रानिलाभ्यंतरात्सौम्येतोऽग्न्युदयादुदग्ध्रुवमुखाद्दिङ्मूढके स्यान्मृतिः॥

ध्ये चिन्हं कुर्यात्॥ पुनस्तत्र तथैव प्रसार्य मध्यचिन्हे शंकुं निखाय तस्मात्पश्चिमचिन्हपर्यंतं रज्जुं प्रसारयेत्। तत्प्राचीसूत्रं॥ एवमुज्जयिन्या दक्षिणतः प्रा-
चीसाधनमुक्त्वानंतरं उत्तरतः प्राचीसाधनमाह॥ सौम्येइति॥ अतः उज्जयिन्याः सौम्ये उत्तरभागे अग्न्युदयात् कृत्तिकोदयात् प्राचीसाध्या॥ एतदुक्तं भ-
वति॥ पूर्ववन्नलिकया युगमात्रोदितां कृत्तिकामालोक्य नलिकामूलाग्राभ्यां लंबौ मुक्त्वा भूमौ चिन्हद्वयं कृत्वा तयोरुपरि प्राचीसूत्रं॥ अथोत्तर-
साधनमाह॥ उदगिति॥ ध्रुवमुखात् उदक् उत्तरदिक्साध्या इदं सर्वेषां साधारणं॥ अथ दिक्मूढत्वे दोषमाह॥ दिङ्मूढके स्यान्मृतिरिति स्पष्टं॥ न

थाचोक्तंदेवयजनदीपिकायां॥चित्रास्वात्यंतरे श्रोणाद्दक्षिणापथवासिनां॥प्राचीतुकृत्तिकाज्ञेयाउत्तरापथवासिनामिति॥श्रोणात्उज्जयिन्याः॥त-
थाचशुल्बं॥ कृत्तिकाश्रवणंपुष्यंचित्रास्वात्योर्यदंतरं॥एतत्प्राच्यादिशोरूपंयुगमात्रोदितेपुरइति॥युगप्रमाणंषडशीत्यंगुलानि॥तथाचशुल्ब
सूत्रं॥अंगुलैरथसंमितायाः प्रमाणं॥तत्राष्टाशीतिशतमीषाचतुःशतमक्षः पक्षः षडशीतिर्युगंचत्वारोष्टकाःशम्येति॥तथाचस्फुटकरणे॥ध्रुव
लंबकरेखायारेखांतःसौम्ययाम्यहरितोस्तः॥तन्मत्स्य पुच्छमुखतः पश्चिमपूर्वाभिधोविद्यादिति॥ वृद्धनारदः॥प्रासादेसदनेलिंदेद्वारेकुंडेविशेषतः

गेहंमाधवपौषफाल्गुननभोमार्गेषुमृद्वानिलैःपाश्यर्केज्यवसुध्रुवैःस्थिरतनौकुर्यात्सुकेंद्राष्टमे॥ ५॥

दिङ्मूढेकुलनाशःस्यात्तस्मात्तंसाधयेद्दिशइति॥अथकेषुमासेषुगृहंकर्तव्यमित्याह॥गेहमिति॥माधवादिषुमासेषुमृद्वादिभिर्नक्षत्रैर्गेहंगृहंकुर्या
त्॥माधवोवैशाखः॥पौषफाल्गुनौप्रसिद्धौ॥नभः श्रावणः मार्गोमार्गशीर्षः॥तेष्वित्यर्थः॥मृदूनिचित्रानुराधारेवतीमृगाः अनिलंस्वाती पाशीवरुणःतद्भं
शततारका॥अर्कोहस्तः॥ईज्यःपुष्यः॥वसुर्धनिष्ठा॥ध्रुवाणिरोहिणीउत्तरात्रयंचतैःस्थिरतनौस्थिरलग्ने॥किंलक्षणे॥सुकेंद्राष्टमेशोभनानिपापग्रह-
रहितानिकेंद्राष्टमानियस्यतत्तथातस्मिन्॥स्थिरतनावितिवापाठःशेषंपूर्ववत्॥५॥ ५ ५ ५ ५

अथोक्तेष्वपि नक्षत्रेषु विशेषमाह पृष्ठाग्रविधौ सति नो विरचयेत् एतदुक्तं भवति कृत्तिकादीनि सप्त नक्षत्राणि पूर्वस्यां मघादि सप्त दक्षिणे इत्यादि सप्त
सप्तशलाकाचक्रस्थितनक्षत्राणां मध्ये गृह्यानिलादौ चंद्रनक्षत्रं यस्मिन् दिग्भागे भवति तद्दिङ्मुखे गृहे संमुखश्चंद्रो ज्ञेयः तत्पृष्ठस्थे पृष्ठतो ज्ञेयः एवमग्र
गे पृष्ठगे वा चंद्रे सति गृहं न कर्तव्यमित्यर्थः तथा च भृगुः चक्रे सप्तशलाकाख्ये कृत्तिकादीनि विन्यसेत् ऋक्षं चंद्रस्य वास्तोश्च पुरः पृष्ठे च नो शुभमि
ति तथा च ब्रह्मशंभुः धनलाभः प्रवासस्यादायुश्चौरभयं क्रमात् दक्षाग्रवामपृष्ठस्थगृहकर्तुर्निशाकर इति नरिक्तकथितौ स्पष्टं नार्कारवारांश

नो पृष्ठाग्रविधौ नरिक्ततिथौ नार्कारवारांशयोरुक्तर्क्षेष्वपि कुंभमीनगविधौ स्तंभोच्छ्रितिं नाचरेत्॥ तुर्या
त्पंचदशात्रिदृक्परिमिताद्वेदाब्धिपंचक्रमान्निंद्यान्यर्कयुतादिगेहकरणे भानि प्रवेशेपि च॥६॥ योः अर्कभौमयोर्वारनवांशा-

योः अर्कभौमयोर्वारनवांशयोः न कुर्यात् उक्तर्क्षेष्वपि कुंभमीनगविधौ सति स्तंभोच्छ्रितिं नाचरेदिति अर्थादन्यत्सर्वं आचरेत् तथा च मांडव्यः पंचके-
ष्वत्र धिष्ण्येषु न कुर्यात्स्तंभमुच्छ्रयं क्षेत्रसूत्रशिलान्यासप्राकारादि समाचरेदिति अथ रवि(?)भवास्तुमाह तुर्यादिति अर्कयुतादि सूर्यनक्षत्रादि
तुर्याच्चतुर्थात्पंचदशात्रिदृक्परिमितात्त्रयोविंशात्सकाशात् क्रमेण वेदाब्धिपंचभानि नक्षत्राणि गृहस्य करणे रचनायां प्रवेशेपि निंद्यानि स्युः तथा-
च व्यवहारसारे त्रिवेदाब्धित्रिवेदाब्धिद्वित्रिभेष्वर्कतः शशी कुर्याल्लक्ष्मीं समुद्वासं स्थैर्यं लक्ष्मीं दरिद्रताः धनं व्याधिं क्रमान्मृत्युं प्रवेशारंभयोर्ऋषि इति
॥६॥

अथचतुर्धाद्वारनिर्णयमाह शेतइति भाद्रपदात्त्रिषुमासेषुस्फरोवास्तुपुरुषः प्रागादिशीर्षःशेतेइति एतदुक्तंभवति भाद्रपदादिमासत्रयेपूर्वशीर्षः
मार्गशीर्षादिमासत्रयेदक्षिणशीर्षः फाल्गुनादिमासत्रयेपश्चिमशीर्षः ज्येष्ठादिमासत्रयेउत्तरशीर्षोवास्तुःशेतएति अत्रअस्यांशीर्षदिशायांसन्मु-
खंगृहमुक्तंप्रोक्तं अथसंक्रांतिपरत्वेनमुखनिर्णयमाह गोल्यजेति गोल्यजघटेषर्केसतियमोदङ्मुखंगृहंकार्यं गोर्वृषः अलीवृश्चिकः अजोमे

शेतेभाद्रपदात्त्रिषुत्रिषुस्फरःप्रागादिशीर्षोत्रहिप्रोक्तंसन्मुखंतुगोल्यजघटेषर्केयमोदङ्मुखं॥ त्वद्रोगेण
कुलीरलेयगरवौपूर्वापरास्यंगृहंनान्यस्थेभुजकोटिघातइभत्दत्शेषंस्फरायाःक्रमात्॥ ७ ॥ ७ ॥

षः घटस्तुला एषुराशिषुअर्केसूर्येसतियमोदङ्मुखंदक्षिणामुखंउत्तराभिमुखंवागृहंकार्यमित्यर्थः त्वद्रोगेणकुलीरलेयगरवौसतिपूर्वापरास्यं पू
र्वाभिमुखंपश्चिमाभिमुखंगृहंकार्यमित्यर्थः त्वद्रोगः कुंभः एणोमकरःकुलीरःकर्कटः लेयःसिंहः एतान्गच्छतिसतथा सचासौरविश्च तस्मि
न्सति पूर्वापरास्यंपूर्वपश्चिममुखंवागृहंकार्यं अन्यस्थेअन्यराशिस्थेरवौसतिगृहंनकार्यं अथायपरत्वेनगृहमुखनिर्णयंविवक्षुस्तावदाय-
साधनमाह भुजेति भुजकोटिघातइभत्दत्शेषंआयास्फः भुजोगृहदैर्घ्यविस्तारयोरन्यतमस्यनाम तदन्याकोटिः तथाचोक्तंलीलावत्यां इ

शेबाहुर्यस्यांतत्स्पर्धिन्यांदिशीतरौबाहुः त्र्यस्रेचतुरस्रेवासाकोटिः कीर्तितातज्ज्ञैरिति तयोर्घातोगुणनं इमत्क्षेत्रं शेषं पूर्वादियथास्यात्तथाध्वजा-
द्यः आयाः क्रमात्स्फुः ॥७॥ ॥ पूर्वादिषुध्वजादयोबलिष्ठाइतिभावः एतेध्वजादयःस्वस्वपदेस्वस्वस्थाने ध्वजःपूर्वेधूम आग्नेयांइत्या-
दिधार्याः अयमर्थः मुख्यगृहापेक्षयादिक्षुवक्ष्यमाणगृहेषुधार्याइत्यर्थः अथवास्वसदृशवस्तुषुधार्याः अथवास्वसदृशस्वत्वगृहेषुधार्याः अथ

पूर्वादिध्वजधूमसिंहश्वानकोक्षाणःखरेभोष्ट्रकाधार्यास्स्वस्वपदेध्वजोखिलमुखःप्राग्याम्यवक्त्रोगजः॥

वाक्रूरकर्मसाधनवस्तुषुपराक्रमिणोधार्याः अथवास्वसदृशवस्तुसत्वोपजीविनांगृहेषुधार्याः अथवास्वानुरूपवस्तुसाध्यहितवस्तुगृहेषुयथा
योग्यंधार्याइत्यर्थः एतत्स्पष्टमुक्तंवास्तुप्रदीपे खेटखर्पटकोटेषुवृषः सिंहोगजःश्वभः वापीकूपतडागादौगजोदेयोविचक्षणैः आसनेयोजयेत्
सिंहं शयनेचैवकुंजरं वृषंभोजनपात्रेचदद्याच्छालादिषुध्वजं महानसेग्निशालायांगृहेचाम्सुपजीविनां धूमंदद्यात्तथाश्वानंयवनांस्तजयोर्गृहे खरो

श्यागृहेयोज्ञेयो ध्वांक्षःपक्षिपतेर्गृहे वृषसिंहगजंदद्यात्प्रासादेपुरमंदिरे तथाचशिल्पशास्त्रे वस्त्रजेधर्मशालायांकुंभेस्तंभेध्वजेध्वजः गौगजोभूगृहेचै साधारणगृहेशुभौ यंत्रेशस्त्रेरथेसिंहोभांडागारेशुभोगजः धान्यांबुस्थानगोखेभशालायांवृषभःशुभः नाड्यभागेद्वाह्ववेद्यांगजसिंहवृषाःशुभा इत्यादि एवंआयसाधनमुक्त्वेदानींतेषांमुख्यान्याह ध्वजोखिलमुखःसर्वदिग्द्वारःप्राम्याम्यवक्त्रोगजःशुगमं प्रागास्योवृषभःआस्यंमुखंप्राङ्मुखोवृ षभःस्पष्टं विवारुणमुखःसिंहःवरुणस्यायंवारुणोदिग्विभागः पश्चिमदिग्विभागतःवारुणोयेभ्यस्तत्रमुखंयस्यसतथा पश्चिमदिशंविनासर्वदि-

प्रागास्योवृषभोविवारुणमुखःसिंहःप्रशस्ताइमेधूमोग्नेःशुनकोंत्यजस्यखगपस्योष्ट्रोदृपल्याःखरः॥८॥

ग्द्वारइत्यर्थः योयोयदिङ्मुखआयस्तत्संभूतगृहस्यतत्तद्दिशिमुखंकर्तव्यमित्यर्थः एवंआयपरत्वेनगृहमुखमुक्त्वाप्रसंगेनआयानांशुभत्वमाह प्रशस्ताइमेइति इमेचत्वारआयाःप्रशस्ताःसर्वेषांशुभाः अर्थादन्येचत्वारः समाआयाअप्रशस्ताः तथाचगर्गः कीर्तिर्शोकोजयोवैरंधनंनिर्ध नतासुखं रोगश्चेतिगृहारंभेध्वजादीनांफलंक्रमादिति अथदुष्टेपिसमयेविशेषमाह धूमोग्नेरिति अग्नेर्गृहेधूमोधूमायःप्रशस्तः अंत्यजस्यशुनकः प्रशस्तःखगपस्यपक्षिपालकस्यउष्ट्रःप्रशस्तः अदृपल्यावेश्यायाःगृहेखरः खरायःप्रशस्तः॥८॥ ७॥ ५॥ ७॥

एवमायपरत्वेनगृहमुखमुक्त्वाधुनाराशिपरत्वेनाह अंत्यवृश्चिककुलीराणांप्राङ्मुखंगृहंहितंप्राहुः अंत्योमीनः वृश्चिकप्रसिद्धः कुलिरःकर्कः एषामित्य-
र्थः जूकोपांत्यगवांप्रचेतोमुखं पश्चिमाभिमुखं जूकःतुला उपांत्यःकुंभः गौर्वृषः एषामित्यर्थः अबलायुग्मैणकानांयमास्यं दक्षिणामुखं अबलाकन्या
युग्मंमिथुनं एणोमकरः एषामित्यर्थः आद्यसिंहधनुषांसौम्यास्यं आद्योमेषः सिंहधनुषीप्रसिद्धे एषांसौम्यास्यं उत्तरामुखंगृहंहितंप्राहुराचार्याः एवं

प्राहुःप्राङ्मुखमंत्यवृश्चिककुलीराणांप्रचेतोमुखंजूकोपांत्यगवांयमास्यमबलायुग्मैणकानांहितं ॥ सौ-
म्यास्यंगृहमाद्यसिंहधनुषामत्रेष्टकाष्टाननंकृत्वासान्यककुप्गवाक्षवदनंतत्कार्यमास्यंनसत् ॥ १ ॥

चतुर्धागृहमुखमभिधायेदानींतन्निर्णयमाह अत्रेष्टकाष्टाननमिति गृहमुखपक्षेषुशोभावकाशानुरूपंइष्टकाष्टाननंइष्टदिङ्मुखंकृत्वा तद्गृहंआ-
सान्यककुप्गवाक्षवदनंकार्यं आसाश्चताअन्यककुभश्चतास्तुगवाक्षाएववदनानियस्यतत्तथा उर्वरितपक्षत्रयप्राप्तदिक्षुगवाक्षाःकार्याइत्यर्थः त-
थाचवास्तुशास्त्रे द्वारंचतुर्विधंप्रोक्तंवास्तुसंक्रांतिभावर्ज कृत्वाचान्यतमंमुख्यंगवाक्षाद्यैःपराणिचेति ॥ १ ॥ ७ ॥ ७ ॥ ७ ॥

एवंगृहमुखनिर्णयमुक्त्वाऽधुनाकोणादिविद्धमुखस्यदोषंतदपवादंचाह आस्यमिति आस्यंगृहस्यमुखंकोणस्तंभादिभिर्विद्धंनसत्स्यात् कोणेभिति कोणः अध्वामार्गः भ्रमोभ्रमयंत्रंघरट्टकुलालचक्रादि कूपःप्रसिद्धः कर्दमःस्नानादिजनितोनिरंतरस्थायी तरुर्वृक्षः द्वाः द्वारांतरं स्तंभःप्रसिद्धः देवस्थावरः एभिर्विद्धंमुखंनसत्स्यादित्यर्थः अथास्यापवादमाह सद्मोच्चेति सद्मोच्चद्विगुणाधिकांतरभवेवेधेनदोषः सद्मनोगृहस्यऔच्च्यंतस्यापेक्षयाद्विगुणाधिकांतरभवेद्विगुणाधिकांतरेजातेवेधेकोणादिवेधेनदोषः अर्थान्न्यूनेदोषःकिलेत्यागमेनिश्चयेवा तथाचागमांतरेऽक्तं मार्गतरुकोण

कोणाध्वभ्रमकूपकर्दमतरुद्वास्तंभदेवेक्षितंसद्मोच्चद्विगुणाधिकांतरभवेवेधेनदोषःकिल ॥ अष्टघ्नेगृहभूफलेभवित्द्धतेशेषंगृहर्क्षंभवेदृक्षेसर्पत्द्धतेव्ययोगृहमसत्स्वल्पायभूरिव्ययं ॥ १० ॥ ७ ॥

कूपभ्रमविद्धमशुभदंद्वारं सद्मोच्छ्रयात्द्विगुणांत्यक्त्वाभूमिंनदोषायेति कात्यायनगृह्यकारिकायामप्युक्तं विद्धंकूपतरुस्तंभपथपंकैःसदेवतैः तद्वारमशुभंप्रोक्तमत्युच्चंनीचमेवचेति अथगृहनक्षत्रानयनंव्ययानयनंचाह अष्टघ्नेइति गृहभूफलेगृहक्षेत्रफले अष्टघ्नेअष्टगुणितेभवित्द्धतेसप्तविंशतित्द्धतेसतिशेषंगृहर्क्षंगृहनक्षत्रंभवेत् ऋक्षेसर्पत्द्धतेअष्टत्द्धतेसतिशेषंव्ययोभवेत् एवमायव्ययावभिधायाधुनातत्फलविशेषणद्वाराह गृहमसदिति स्वल्पायभूरिव्ययंगृहंअसत् अशुभंस्यात् स्वल्पायश्चभूरिव्ययश्चतौयस्मिंतत्तथा अर्थाद्बह्वायात्स्वल्पव्ययंशुभं ॥ १० ॥

नक्षत्रेज्ञातेराशिनिर्णयमाह अश्विवित्रितयंमेषेज्ञेयं त्रिपित्र्यंमघात्रयंहरौसिंहेज्ञेयं मूलत्रयंधनुषीज्ञेयं अन्येषुराशिषुद्वेद्वेभेज्ञेये तथाचगर्गः अ-
श्विन्यादित्रयंमेषेसिंहेप्रोक्तंमघात्रयं मूलादित्रितयंचापेशेषभेषुद्वयद्वयमिति अथगृहतत्स्वामिनोर्घटितमाह गृहेशेति गृहंप्रसिद्धं इशःस्वामी त
योर्घटितंप्राग्वद्विवाहवत्योज्यं तत्रविशेषमाह नाड्यंन्यथेति नाडीएकनाडी अन्यथायोज्या विवाहवत्नयोज्येत्यर्थः अत्रएकनाड्येवप्रशस्तेतिभा-

मेषेश्विवित्रितयंहरौत्रिपितृभंमूलत्रयंधन्विनिद्वेद्वेभेपरतोगृहेशघटितंप्राग्वत्तुनाड्यन्यथा॥ एकादिद्विगु-
णोत्तरागृहमुखाद्दिक्ष्वंककाःस्फुः क्रमाच्छालाशांकयुतिःकुयुकुप्तवमुखान्योकांसिसंतिस्फुटं ॥ ११ ॥

वः तथाचवृद्धगर्गः प्रभुःपण्यांगनांमित्रंदेशंग्रामंपुरंगृहं एकनाडीस्थितंभव्यंविरुद्धंवेधवर्जितमिति तथाचज्योतिःसागरे सेव्यसेवकयोश्चैवगृह
तत्स्वामिनोरपि परस्परंमित्रयोश्च एकनाडीप्रशस्यइति अथांशसाधनार्थंगृहाणितन्नामाक्षरसंख्यांचाह एकादीति गृहमुखात्सकाशात्क्रमात्प्रदक्षिण
क्रमात्दिक्षुचतसृषुदिक्षुएकादिद्विगुणोत्तराअंकास्युः एतदुक्तंभवति द्वारदिशिएकः तस्माद्द्वितीयदिशिद्वौ तृतीयदिशिचत्वारः चतुर्थदिशि अ-

दोऽएवं भवंतीत्यर्थः शालांशकयुतिः शालादिगंकयोगः कुयुक् एकयुक्तासती ध्रुवमुखानि ध्रुवादिकानि शास्त्रोदितानि गृहाणि स्फुटं संभवंति तानि च-
था ध्रुवं धन्यं जयनं दंखरं कांतं मनोरमं स्नमुखं दुर्मुखं क्रूरं स्नपक्षं धनदं क्षयं आक्रंदं विपुलं चैव विजयं चेति षोडशमिति ॥ ११ ॥ ॥ नामाक्षरसंख्या
आह षष्ठं मर्यादीकृत्येत्याषष्ठं तस्मात्प्रथमद्वितीयतृतीये चतुर्थपंचमषष्ठानि दशमंत्रयोदशं इमे अष्टगृहा द्यर्णाः द्व्यक्षराः षष्ठांत्यं सप्तमं गृहं चतु-

आषष्ठाद्दशमंत्रयोदशमिमे द्यर्णाः परे त्र्यक्षराः षष्ठांत्यं चतुरक्षरं खलु गृहं स्फः षोडशैवं गृहाः ॥ गेहक्ष्माफल
युग्व्ययो गृहभवैर्नामाक्षरैः संयुतः स्तष्टो वन्हिभिरंशकानस्नभदं गेहद्वितीयांशकं ॥ १२ ॥ ७ ॥

रक्षरं चत्वारि अक्षराणि यस्मिंस्तत्तथा अन्ये गृहाः त्र्यक्षराः एवं षोडशगृहाः स्फः गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाइत्यमरः अथांशक-
साधनमाह गेहक्ष्मेति गेहक्ष्माफलयुग्व्ययः गृहक्षेत्रफलयुक्तः पूर्वानीतो व्ययः गृहभवैर्नामाक्षरैः संयुतः वन्हिभिस्त्रिभिस्तष्टः शेषितः सन् अ-
शंकास्फः इंद्रो यमो राजेति तन्नामानि ग्रंथांतरे उक्तानि तत्र द्वितीयांशकं पस्त्यं गृहं नस्नभदं अर्थात्प्रथमतृतीयांशकं स्नभदमित्यर्थः निशांतपस्त्यसदनं भव
नागारमंदिरमित्यमरः ॥ १२ ॥

अथगुणविचारणावधिमाह यावत्पर्यंतंकरैःहस्तैः कृत्वाभूरिगुणंबहुगुणगृहंत्द्दि अंतःकरणेस्फुरतितत्तावद्विचार्यंचेयदितैःकेवलैःकरैः ह-
स्तैःकृत्वाबहुगुणंनस्फुरति तदाअंगुलमुखंअंगुलादिकंकरेषुक्षिप्त्वाथवाविहायतनुयात्कुर्यात् अथोपायांतरसूचनामाह श्रीगोपीपतीति गो
पीपतिगोपीराजःमेंगःमेंगनाथदैवज्ञः म्हालुगिर्म्हालुगिंदैवज्ञः एतन्मुखेज्योतिर्विद्भिः आयासविछित्तयेयत्स्वेष्टायर्क्षफलंनिबध्यंतदिहास्मिन्गृ
हकरणविषयेज्ञात्वास्थूलंस्वाभीष्टस्थूलंसाधयेत् तथाचगोपीराजः विष्णुंव्येकायगोभू १९ हतिभयुजिफलंगोपिराजोभ २७ शेषात्सायंचेष्टाष्टिह

॥ यावद्भूरिगुणंत्हृदिस्फुरतितत्तावद्विचार्यंकरैश्चेत्तैर्नोतनुयादिहांगुलमुखंक्षिप्त्वाविहायाथवा ॥ श्रीगोपीपतिमेंग
म्हालुगिंमुखैरायासविछित्तयेस्वेष्टायर्क्षफलंनिबध्यमिहतत्ज्ञात्वास्थूलंसाधयेत् ॥ १२ ॥ ७ ॥ ७ ॥

घ्या २१६ युतमहि ८ हताद्दक् २ प्रकृत्याख्य २१ विश्वे १३ बाणाः ५ सिद्धा २४ षि १६ नागो ८ द्व २७ धृति १९ गिरिशा ११ त्र्या ३ कृतीं २२ द्र १४ तु ६ त-
त्वा २५ सध्यं १७ क ९ क्ष्मानखे २० ना १२ र्णव ४ विकृति २३ दिना १५ श्च ७ त्कृति २६ धृत्य १८ थाशा १० इति अस्यार्थः गोपिराजः विष्णुंविष्णुना-
मानंशिष्यंप्रत्याहेत्यन्वयः किमाह हेविष्णोव्येकायगोभू १९ हतिभयुजिभ २७ शेषात् अहि ८ हताद्दक्प्रकृत्यादयः फलंस्यात् निगतः एकोय
स्मात् सव्येकः सचासोआयश्चव्येकायः व्येकायश्चगोभूश्च अनयोर्हतिः गुणनंव्येकायगोभूहतिश्चभं चव्येकायगोभूहतिभेनयोर्युक्योगः तस्यांभ

शेषात्सप्तविंशति-हृच्छेषात् एकादिषु सप्तविंशतिपर्यंतेषु अहहना अष्टहताद्दक्‌भक्तव्यादयः फलं क्षेत्रफलं स्यादित्यर्थः कथंभूतं फलं सायं आयेन
सहवर्तमानं सायं इष्टायसहितमित्यर्थः एतत्स्वेष्टायनक्षत्रजं फलं भवति न्यासः वाइत्यथवातत्सायं फलं इष्टाष्टिदृ १२१६ घ्यायुतं सस्फलं स्यात् इष्ट-
श्च अष्टिदृकुच इष्टाष्टिदृक तयोर्घ्नीहतिस्तयायुतमित्यर्थः इदमपिस्वेष्टायनक्षत्रजं फलं भवतीति अत्रांकन्यास एवव्याख्यानं तथाच मेंगना
थदैवज्ञस्यसूत्रं इष्टभात्यष्टिघातेय आयस्तेनोनितेष्टकः त्रीत्दलुध्यहतागाश्वि २७ युतेत्वेष्टायभंभवेदिति अस्यार्थः इष्टभात्यष्टिघाते इष्टभं
च अत्यष्टिश्च तयोर्घातो गुणनं तस्मिन्पृथक् स्थापितेय आयस्तेन ऊनितेष्टकः यदि ऊनोनभवति तदाष्टौ प्रक्षिप्य स्फोटनीयः ऊनितेष्टायः स्त्रीहलदु
ध्यहतागाश्वियुतेलब्धेन आहताश्चते अगाश्विनश्चतैः पृथक्स्थापिते इष्टभात्यष्टिघाते युते सति इष्टायभं क्षेत्रफलं भवेत् आयश्च भंच आयभे इष्टे
आयभेयस्मितत्तथा अत्रयदि भिर्निःशेषो भागो न गच्छति तदा तत्र तावत् अष्टौ क्षेप्यः यावत्त्रिभिर्भागो गच्छति तथाच म्हालुगिदैवज्ञस्यसूत्रं ध्ये
केष्टर्क्षहताद्विबाणशशिनो १५२ स्त्र्यायुता १७ स्तेपिचव्येकेष्टायहतेकनाग ८१ सहिताः षण्मूर्छनाभि २१६ हृताः शेषं क्षेत्रफलं भवेदभिमतस्वेष्टाय
नक्षत्रजं स्यात् दैर्घ्ये तदभीष्टविस्तृतिहृतं दैर्घ्योध्धृतिं विस्तृतिरिति स्पष्टार्थोयं श्लोकः इत्यादिविचारणया इष्टं क्षेत्रफलं अवकाशानुरूपं दद्दिध्धत्वा
स्थलं साधयेदित्यर्थः॥ १३ ॥ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथस्थलसाधनायसूत्रमोटनलक्षणमाह अजरत्सूत्रंनूतनसूत्रंद्विघ्नायाममितंद्विपाशंचविधाय अंतात् एकस्मात्तत्रांतात् अंकयेदित्यन्वयः
द्विघ्नश्चासौआयामश्चद्विघ्नायामः आयामोदैर्घ्यंतेनमितंद्विगुणितदैर्घ्यसमानमित्यर्थः द्विपाशंद्वौपाशौयस्मिंतद्विपाशंएवंविधंसूत्रंविधायकृत्वा
अंतात् सकाशात् अंकयेत् चिन्हयेत् एतदुक्तंभवति पूर्वकल्पित क्षेत्रस्यदैर्घ्यमितंसूत्रंद्विगुणंविधायतदंतयोः पाशौकृत्वा अंकयेत् कुत्रकुत्रां

द्विघ्नायाममितंद्विपाशिमजरत्सूत्रंविधायांकयेच्चायामांघ्रिमितेच विस्तृतिदलेतौकर्षकोणाभिधौ॥

कयेदित्याह आयामांघ्रिमितेचपरंविस्तृतिदलेअंकयेत् त्रयश्चतेआयामांघ्रयश्चतेतथातैर्मितंतस्मिन् एतदुक्तंभवति क्षेत्रदैर्घ्यंचतुर्भिर्भक्तंकाल
ब्धंअंघ्रिप्रमाणंएकस्मादंतात् अंघ्रित्रयंहित्वाचिन्हयेत् तस्मादेवांतात् विस्तृतिदलेक्षेत्रस्यविस्ताराद्धमितेअंकयेत् तौअंकौकर्षकोणाभिधौस्तः
अंघ्रित्रयेकृतः कर्षाख्यः विस्तृतिदलेकृतोंकः कोणाख्यः एवंसूत्रमोटनमुक्तास्थलसाधनमाह पाशाविति पाशौक्षेत्रविरामशंकुनिहितौ

कृत्वा आद्यं अंकं आकर्षयेदित्यन्वयः क्षेत्रस्य विरामौ अंतौ नयोः शंकुं निखालयोः शंकोः मेदितसूत्रांतपाशौ निधाय कर्षाख्यं चिन्हं धृत्वा एकस्यां
दिशि आकर्षयेत् यथोभयशंकुगतारज्जुसमाना आकृष्टास्यात् तया आकर्षयेदित्यर्थः कोणेशंकुरिति कोणे कोणचिन्हे यत्र कोणचि
न्हमागतं तत्र भुवि शंकुं निखायइत्यध्याहारः इत्यमुनाप्रकारेण इतरः शंकुर्निखेयः एतदुक्तं भवति तदेव कर्षचिन्हं अन्यस्यां दिशि आकृ

पाशौ क्षेत्रविरामशंकुनिहितौ कृत्वाद्यमाकर्षयेत्कोणे शंकुरितीतरो विनिमयाद्रज्ज्वंतयोश्चापरौ ॥ १४ ॥

ष्यकोणे शंकुर्निखेयः एवं कोणद्वयसाधनमभिधाय अन्यकोणद्वयसाधनमाह विनिमयादिति रज्ज्वंतयोर्विनियमाद्विपरीतधारणा-
त् ॥ अपरौ कोणशंकौ निखेयौ एतदुक्तं भवति रज्ज्वंतौ विपरितौ धृत्वा पूर्ववत् कर्षाकषर्णं कृत्वा कोणयोः शंकू निखेयौ ॥ १४ ॥
॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

एवंक्षेत्रसाधनमुक्त्वासूत्रन्यासमाह आग्नेयादिदृढंप्रदक्षिणगतंसूत्रंआसादयेत् मध्येक्षेत्रमध्येवामकपार्श्वस्कंधंपुरुषंप्रागुक्तशिरस्कंध्यात्वा तं-
ध्यातंपुरुषंउत्तानकंध्यायेत् कथंभूतंपार्श्वस्थं लघुमध्येगुरोःपरस्याग्रयोपरितथैवपूरयेत् पश्चिमंचगुरुभिः पुनःपुनः सर्वमेव लघुरित्ययंवि
धिरिति कथंभूतं अष्टाश्व्यंशं अष्टाश्विनोंशाभागायस्मिन्सतथातं अयमर्थः क्षेत्रप्रमाणंकुकलासरूपंवास्तुपुरुषंप्रकल्प्य ततोष्टाविंशतिधाकु-
र्यात् एवमष्टाश्व्यंशंप्रकल्प्यपुच्छात्सकाशात् अगेंदुसंमितलवान्सप्तदशभागान्विहायत्यक्त्वा अग्रगस्तदग्रगोभागोनाभिः इतोनाभेःसकाशात्

आग्नेयादिदृढंप्रदक्षिणगतंसूत्रंसमासादयेन्मध्येवामकपार्श्वस्कंधपुरुषंध्यात्वातमुत्तानकं॥ अष्टाश्व्यंश२८
शगमेंदु१७संमितलवान्पुच्छाद्विहायाग्रतोभागोनाभिरितःखनेल्लवमितंवामेश्मभिःपूरयेत् ॥ १५ ॥

वामेवाग्रभागेलवसंमितंखनेत् अनंतरंअश्मभिःपूरयेत् तथाचब्रम्हशंभुः सूत्रभित्तिशिलान्यासंस्तंभस्यारोपणंतथा पूर्वदक्षिणयोर्मध्येकुर्यादित्या
ह काश्यपइति नारदः नभस्यादिषुमासेषुत्रिषुत्रिषुयथाक्रमं॥पूर्वादिदिक्शिरावामपार्श्वशायीप्रदक्षिणमिति तथाचशिल्पशास्त्रे वास्तोःशिरसिपुच्छे
चयाम्यकुक्षौचपृष्ठतः आयुःकामोखनेनैव वामकुक्षौखनिःशुभा वास्तुक्षेत्रप्रमाणंचकल्पयित्वास्यवामके कुक्षौखातंविधायादौग्रावाणैः पूरयेत्
त्तइति तथाचलल्लः त्यजेद्दशशिरोभागोत्यग्रेसप्तदशांशकान् मध्येनाभिंविजानीयात्तत्रशंकुं प्रतिष्ठयेत् अस्थिरम्यशिरोयत्रवास्तोस्तद्गण

येत्करे: दैर्घ्यंवाविस्तृतिंतत्रकत्वाष्टाखिमितान्शकान्इति १५ अथशंकुन्यासमाह अत्रकुक्षिस्थलेनानरःशंकुःकालेमुहूर्तसमयेनिधेयः स-
कियत्प्रमाणइत्यपेक्षायांमानमाह अग्र्यात्विप्रात्सकाशाद्वर्णपरत्वेनसिद्धा २४ विंशा २० स्य१६ हः कृत् १२ संख्यांगुलकःनिधेयःप्रतिष्ठाप
नीयः एतदुक्तंभवतिविप्रेणसिद्धसंख्यांगुलकश्चतुर्विंशांगुलोनिधेयः क्षत्रियेणविंशांगुलः वैश्येनअष्टांगुलः षोडशांगुलः शूद्रेणअहःकृत्सं
ख्यांगुलोद्वादशांगुलोनिधेयइत्यर्थः किंलक्षणः नाउक्ततरुजः शास्त्रोक्तवृक्षोद्भवः पुनःकिंलक्षणः त्रिभागचतुरस्राष्टास्रकानस्रकःत्रिभा

नाकालेत्रनिधेयउक्ततरुजोग्र्यात्सिद्ध २४ विंशा २० स्य१६ हःकृत् १२ संख्यांगुलकस्त्रिभागचतुरस्रा
ष्टास्रकानस्रकः ॥

गेषु चतुरस्राष्टास्रकानस्रकानियस्मिन्सतथा एतदुक्तंभवति यथाप्रमाणंशंकुंत्रिविधाविभज्या द्यांशंच
तुरस्रंद्वितीयांशंअष्टास्रं तृतीयांशंअनस्रंवर्तुलंकुर्यादितिभावः तथाचोक्तंग्रंथांतरे स्याच्चतुर्विंशविंशाष्टिद्वादशांगुलकैःक्रमात् विप्रादीनांशंकुमा
नस्वर्णवस्त्राद्यलंकृतं खदिरार्जुनशालोत्थंयुगपत्रतरूद्भवं रक्तचंदनपालाशरक्तशालकिलालजं निंबकारंजकुटजवैणकंबिल्ववृक्षजं शंकुं
त्रिधाविभज्याद्यं चतुरस्रंततःपरं अष्टास्रंचतृतीयांशं अनस्रंमृजुमव्रणं एवंलक्षणसंयुक्तंपरिकल्प्यशुभेदिनइति अथरेखाकरणमाह कमिति

अग्निजेनस्रुवर्णेनब्राम्हणादिकः कादिसंस्पृष्ट्वासूत्रवद्रेखांरचयेत् सूत्रवदिति आग्नेय्यादिप्रदक्षिणंकुर्यादित्यर्थः एतदुक्तंभवति ब्राम्हणःकंशि
रःस्पृष्ट्वा तर्जन्यावाकृत्वाआग्नेयादिप्रदक्षिणंसूत्रानुगतांरेखांकुर्यात् तथैवक्षत्रियोवक्षस्थलंस्पृष्ट्वारेखांकुर्यात् वैश्यःउरुयुगंस्पृष्ट्वारेखांकुर्यात् शूद्र
पादयुगुलंस्पृष्ट्वारेखांकुर्यात् तथाचल्लः कृत्वासूत्रनिपातंमध्यांगुल्याअथवाप्रादेशिन्या अंगुष्ठेनवामपाणिनाकक्षांतरमुक्ताभिः रेखांकुर्यादित्यादि त
थाचभृगुः विप्रःशीर्षंनृपोवक्षोवैश्यश्चोरूपरःपदौ स्पृष्ट्वारेखांगृहारंभेकुर्यादग्नेःप्रदक्षिणमिति अग्नेरित्याग्नेय्याः तथाचकारिकायां अंगुष्ठकेनदेशि

कंवक्षस्थलमुरुपादयुगुलंसंस्पृश्यविप्रादिकोरेखांसूत्रवदग्निजेनरचयेत्तद्वच्चभित्तेःशिलाः ॥ १६ ॥

न्यारेखांकुर्वीतसूत्रतःस्वर्णेनमणिनारूप्यमुक्तादधिफलाक्षतैः कुसुमैर्वानशस्त्रेणनलोहेननभस्मनाकाष्ठादिभिर्नापसव्यांनवक्रांदोषदर्श
नात् शस्त्रेणशस्त्रमृत्युःस्यादित्यादिस्पष्टमीरितमिति तथाचबृहद्वास्तुपद्धतौ शस्त्रेणशस्त्रमृत्युर्बंधोलोहेनभस्मनाग्निभयं तस्करभ
यंतृणेनचलिखिताकाष्ठेनराजभयं वक्राचपादलिखिताशत्रुभयदाक्लेशदाविरूपाच चर्मांगारास्थिकृतांदंतेनचकर्तुरशुभाय वैरमपसव्य-
लिखिताप्रदक्षिणासंपदोविनिर्दिश्याइति अथशिलान्यासमाह भित्तेःशिलाअपिसूत्रवदाचरेयुः आग्नेयादिप्रदक्षिणंस्थापयेयुरित्यर्थः तथा-

च्चवराहः दक्षिणपूर्वकोणेकृत्वापूजांशिलांन्यसेत्प्रथमं शेषाः प्रदक्षिणेनस्तंभाश्चैवप्रतिष्ठाप्याइति ॥१६॥ अथभित्तिप्रसंगेनद्वारमाह दैर्घ्येगृ
दैर्घ्येअंकाप्तेनवभिर्भाजितेसतिपूर्वादौदिशिक्रमेणसव्यतोवामभागात्त्रिषड्अर्थपंचमलवेद्वाः द्वारंउक्तं मुनिभिरितिशेषः त्रयश्चषट्च अर्था-
श्चपंचचत्रिषड्अर्थपंच एतेषांसंख्यापूरकात्रिषड्अर्थपंचमास्तेचतेलवाश्चतेषांसमाहारस्तस्मिन् एतदुक्तंभवति गृहदैर्घ्येनवभागंकृत्वापूर्वाभि
मुखेगृहेक्रियमाणेवामभागात् अंशद्वयंत्यक्त्वातृतीयांशेद्वारंकर्तव्यं दक्षिणाभिमुखेगृहेतथैवांशपंचकंत्यक्त्वाषष्ठेंशेकार्यं पश्चिमाभिमुखे
तथैवांशचतुष्कंत्यक्त्वापंचमांशेकार्यं उदङ्मुखेपंचमांशे एतद्वारंकर्तव्यं सर्वासुदिक्षु अखिलवके चतुर्भागेद्वारुदिता किंलक्षणाद्वाः द्व्यंश

॥ पूर्वादौत्रिषड्अर्थपंचमलवेद्वाः सव्यतोंकोद्धृतेदैर्घ्येद्व्यंशसमुच्छ्रिताखिलवकेसर्वासुदिक्षूदिता ॥

समुच्छ्रिताद्विभागोच्चा तथाचवराहः दैर्घ्येनवांशाः पदमत्रसव्यात् द्वारंशुभंप्राक्त्रिचतुर्भागे चतुर्थषष्ठेदिशिदक्षिणस्यांपश्चाच्चतुःपंच
मकेतथोदगिति तथाचच्यवनः मानाधिकोनद्विभागेद्वारेनीचसुखक्षयइति अथनिष्पन्नासुभित्तिषुस्तंभप्रतिष्ठामाह स्तंभोग्नेर्दिशी
ति अग्नेर्दिशि आग्नेयांसुसमयेपूर्वोदितेस्तंभःस्थाप्यः अत्राप्युक्तनरुजइत्यनुवर्तते किंलक्षणःस्तंभःपूजितःप्राक्चंदनार्चितः पु-
नः किंलक्षणः शिरःछत्रभाक्शिरसिछत्रंभजतेइति तथाछत्रंतुकाकादिपक्ष्युपवेशनभयात्स्तंभोपरिक्रियते तथाचवराहः छत्रस्रग्बंधयु

तः कृतधूपविलेपनः समुत्थाप्यः स्तंभ स्तथैव कार्यो द्वारोच्छ्रायः प्रयत्नेनेति तथाचोत्पलः स्तंभोपरियदोलूककाकगृध्रादिपक्षिणः व्यालादयश्च
तिष्ठंतितदाकर्तुर्नशोभनं तस्मात्स्तंभोपरिछत्रंशाखांफलवतींतुवा धारयेदथवावस्त्रंबुधैरत्नादिनिक्षिपेदिति गुर्जरदेशेकचित्कालसर्पमवलोक्य-
तेतच्छून्यदिशिप्रथमंस्तंभप्रतिष्ठांकुर्वंति तदसत् यतस्तदवलोकनंविवाहवेद्यांकोणेषुश्रृंगारार्थंस्तंभान्तोपयंतीनद्विषयंतदप्येकदेशीयंनवहसंम
तं कालसर्पस्तुयथा ईशानतः सर्पतिकालसर्पोविहायसृष्टिंगणयेद्विदिक्षु पश्चाद्गतिस्तंन्मुखमध्यपुच्छंत्रिकेत्रिकेंवैवृषसंक्रमादेः अहेःफणा
यांमरणंवरस्यमध्येकुमार्याः स्वजनस्यपुच्छेविधेयमेकंकिलशून्यदेशे विवाहवेद्यांनिखनेच्चकीलमिति वृषादित्रिषुराशिषुरवौ आग्नेयांस्तंभरो-

॥ ॥ स्तंभोग्नेर्दिशिपूजितःक्रमयेयेस्थाप्यः शिरश्छत्रभाग्विस्ताराष्टि १६ लवान्वितैः कृत ४ करैस्तुल्यंगृहोच्चंविदुः १७

पणंकार्यं सिंहादिषुत्रिषुईशान्यां वृश्चिकादित्रिषुवायव्यां घटादित्रिषुनैर्ऋत्यांकर्तव्यमिति तद्विवाहएव गृहेसिंहादवलोकनीयं वृषादेर्घां
तथाच वृषादेर्ध्यांगृहेसिंहान्मीनान्त्रिणिस्फुरालये मुखंमध्यंतथापुच्छंखहस्तंभंनियोजयेदिति अन्यत्र गृहस्तंभप्रतिष्ठापनंबहुभिर्ग्रंथकारैराग्नेय-
यामेवाभिहितं तथाचब्रम्हशंभुः सूत्राभित्तिशिलान्यासंस्तंभस्यारोपणंतथा पूर्वदक्षिणयोर्मध्येकुर्यादित्याहकश्यपः तथाचशार्ङ्गधरः प्र
सादेषुचहर्म्येषुगृहेष्वन्येषुसर्वदा आग्नेयांप्रथमंस्तंभंस्थापयेत्तद्विधानतः तथाचवराहमिहिराचार्याः दक्षिणपूर्वकोणेकृत्वापूजांशिलान्य

सेत्स्यर्थमं शेषाःप्रदक्षिणेनस्तंभाश्चैवंप्रतिष्ठाप्याइति कात्यायनगृह्यकारिकायामप्युक्तं एकैकमुच्छ्रयेत्स्तंभंमंत्रैरेतैःशिलातले शिरोवसानइत्यं
तैरित्यादिभिर्गृहीत आग्नेय्यादिषुकोणेषुमंत्रैरेतैःशिलान्यसेदिति गृह्यहरिहरभाष्येशालापद्धतिग्रंथेप्येवमेवोक्तमित्यलमतिप्रसंगेन उक्त
तरुजइत्युक्तत्वात् शास्त्रांतरात्काष्ठान्यवगंतव्यानि तथाचवास्तुशास्त्रे श्रीपर्णीरोहिणीशाकसर्जाश्चसरलाःशुभाः पतंगरोध्रशालाख्या
स्तालार्जुनकशिंशपाः चंदनाशोकबदरीमधूकाश्चकदंबकाः प्रशस्ताश्चशमीनिंबबिल्ववर्ज्यंगृहांतिके गृहेकाष्ठंसमंश्रेष्ठमलिंदेविषमंशुभमि
ति नारदः प्लक्षोदुंबरचूताख्यानिंबस्नुहिबिभीतकाः दग्धाःकंटकिनोवृक्षावटाश्वत्थकपित्थकाः अगस्तिशिग्रुतालाख्यास्तित्तिडीकाश्चनिंदि-
ताः अन्येचगृहनिर्माणेयोजनीयाःसदाद्रुमाइति तथाचवराहः पितृवनमार्गसुरालयवल्मीकोद्यानतापसाश्रमजाः चैत्यसरित्संगमभवाश्चघट
तोयसिक्ताश्च कुंजानुजातवल्लीनिपीडितावज्रमारुतोपहता स्वपतितहस्तीनिपीडितशुष्काग्निप्लुष्टदुष्टमधुनिलयाः तरवोवर्जयितव्याःशुभदाः
स्युःस्निग्धपत्रकुसुमफलाः सुरदारुचंदनसमामधूकतरवःशुभाद्विजातीनां क्षात्रस्यारिष्टाश्वत्थखदिरबिल्वावृद्धिकराः वैश्यानांजीवकवंदिरक
सिंदूकस्यंदनाश्चशुभफलदाः तिंदुककेसरसरलार्जुनोत्थशालाश्चशूद्राणां सर्वेषांवाशस्ताःसर्वेवृक्षाश्चनिंदितानोचेदिति व्यासोपि अन्यवे-
श्मस्थितंदारुनैवान्यस्मिन्प्रयोजयेत् नतत्रवसतेकर्तावसेत्तत्रनजीवतीति समरंगणेइष्टकालोष्टपाषाणमृत्तिकाजीर्णमायसं तृणंपर्णंबुधैःप्रो
क्तं दारुनूनंसहायवै इति शार्ङ्गधरेपि नूतनेनूतनंकाष्ठंजीर्णेजीर्णंप्रशस्यते जीर्णेचनूतनंकाष्ठंनोजीर्णेनूतनंशुभमिति॥ वृक्षच्छेदप्रार्थनाग्रंथांतरेउक्ता॥ यानीह

भूतानिवसंतितानिबलिंगृहीत्वाविधिवत्प्रयुक्तं अन्यत्रवासंपरिकल्पयंतुक्षमंतुतान्यद्यनमोस्तुतेभ्यइति अथस्तंभप्रसंगेनगृहोच्चतामाह विस्ता
रेति विस्तारस्यगृहविस्तारस्यअष्टिलवः षोडशांशस्तेन अन्वितैर्युक्तैः कृतकरैश्चतुर्हस्तैस्तुल्यंसमानंगृहोच्चंविदुर्मुनयइत्यध्याहारः तथाचर
त्नकोशे विस्तारषोडशांशः चतुर्हस्तोभवेद्गृहोच्छ्रायइति तथाचलल्लः नात्युच्छ्रितंनातिनीचं कुड्योत्सेधंयथारुचीति ॥ १७ ॥ अथमु-

स्नानाग्निस्वपिवस्त्रभोजनपशुद्रव्यामरौकःस्थितिंपूर्वादौजलमीशितुर्दिशिपरंवायोरपाङ्मूत्रकं॥

स्व्यगृहात्कस्यगृहंकस्यांदिशिकर्तव्यमित्याह स्नानंप्रसिद्धं अग्निःप्र॰स्वपिःशयनं वस्त्राणिप्रसिद्धानि भोजनंप्रसिद्धं पशवोगवादयः द्रव्याणि
सुवर्णादीनि अमराःदेवाः एषांओकांसिगृहाणितेषांस्थितिःस्थापनंपूर्वादौदिशिक्रमेणकार्यमित्यध्याहारः तथाचनारदः स्नानागारंदिशिप्रा-
च्यांमाग्नेयामग्निमंदिरं याम्यायांशयनागारंनैर्ऋत्यांवस्त्रमंदिरं प्रतीच्यांभोजनागारंवायव्यांपशुमंदिरं भांडकोशंतूत्तरस्यांईशान्यांदेवमंदिरमिति

अथजलस्थानमाह ईशितुरीशानस्यदिशिजलंकार्यंनान्यत्र तथाचलल्लः प्राच्यादिदिक्स्थेसलिलेसुतहानिः शिखिभयंरिपुभयंच स्त्रीकलहं-
स्त्रीदोष्ट्यंनैष्ठ्यंचिंतात्मजविरक्षिरिति अथान्यदप्याह परमिति परममनूक्तंपदार्थजातंवायोर्दिशिकार्यं अन्यानिमारुत्यामिति लल्लोक्तत्वात्
अपाक्दक्षिणस्यांदिशिमूत्रकंकार्यं स्थलसंकोचेसति एतद्यल्लोक्तं तद्गृहमध्येबाह्यतश्चस्वस्वस्थानेतारतम्येनयोज्यं अथशक्तिभुवोःसंकोचे
सतिकर्तव्यमाह अल्पेइति शक्तिभुवोरल्पेसतियथारुचिकार्यं गेहस्यदक्षेपरेआचार्याघरट्टादिकंऊचिरे घरट्टःपिष्टयंत्रं अंबुउदकंउलूखलादि

अल्पेशक्तिभुवोर्यथारुचिपरेगेहस्यदक्षेघरट्टांबूलूखलचुल्लिकापितृपदप्रक्षालनान्यूचिरे ॥ १८ ॥
द्वात्रिंशाधिकहस्तमब्धिवदनंतार्णंत्वलिंदादिकं नैषामायादिकामीरितंतृणगृहंसर्वेषुमास्स्वदित ॥ ॥

कंप्रसिद्धं तथाचोक्तंग्रंथांतरे उलूखलंपिष्टयंत्रमग्निस्थानजलाश्रयं वेश्मनोदक्षिणेपार्श्वेपितॄणांपादशौचनमिति ॥ १८ ॥ अथकेषुकेषुगृहे
षुआयादिकंभाव्यंकेषुनभाव्यमित्याह द्वात्रिंशेभ्यःअधिकाःहस्तायस्मिन्गृहेप्रमाणंतत् द्वात्रिंशाधिकहस्तं अब्धिवदनंचतुर्मुखं॥तार्णंतृणगृहं॥अलिं
दादिकं अलिंदंपट्टिशालेतिलोकेप्रसिद्धं आदिशब्देननिर्व्यूहादिगृहंभूषणंगृह्यते एषुआयादिकंनईरितंनोक्तं तथाचदैवज्ञवल्लभे अलिंदनिर्व्यू
हविनिर्गमाद्याश्चतुर्दिशंयेगृहभूषणाय आयादिकंतेषुनचिंतनीयंयतोननेवास्तुपरिग्रहेस्युरिति तथाचचिंतामणौ यत्रदैर्घ्यंगृहादीनांद्वात्रिं-

मानूगणनायव्ययादिकमिति तथाचराजमार्तंडे आयव्ययौमासरुक्षांश्चिंतयेन्नतृणालयेइति तथाचवसिष्ठः एकादशेयवादूर्ध्वंयावद्वात्रिंशहस्त-
कं तावदायादिकंचिंत्यंतदूर्ध्वंनैवचिंतयेदिति अथतृणगृहेविशेषमाह तृणगृहंसर्वेषुमासस्वुदितं सर्वमासेषुकर्तव्यमित्यर्थः अथनिष्पन्नेगृहे
प्रवेशमाह छन्नमिति आरंभोदितमासेषुशास्त्ररीत्यावेश्मगृहंविशेत् आरंभायउदिताःप्रोक्तास्तेचतेमासाश्चतेषुशास्त्ररीत्यासूत्राद्युक्तवि-
धिनागृहंप्रविशेत्स्वामीत्यर्थः कथंभूतंवेश्मछन्नंकुड्यैराच्छादितं पुनःकिंलक्षणं वश्यकपाटं वश्यंअधीनंकपाटंयस्यतत्तथा तद्वश्यमिति

छन्नंवश्यकपाटमर्चिततमंवेश्मोक्तरीत्याविशेदारंभोदितमास्सुनारदमतान्माघोर्जशुक्रेतुषु॥१९॥

लापितंउद्घाटितेंवातथैवस्थिरंभवति पुनःकिंलक्षणं अर्चिततमंतोरणमालाद्यलंकृतं तथाचनारदः अकपाटमनाछन्नमदत्तबलिभोजनं गृहंन
प्रवेशेदेवविपदामाकरंहितदिति तथाचच्यवनः स्वयमुद्घाटितेरोगोपिहितेचकुलक्षयः मानाधिकेनदिग्भागेद्वारेनीचेस्करुस्क्षयइति अथप्रवेशेमा
सविशेषमाह नारदमतात् माघोर्जशुक्रेषुमासेषुगृहंप्रविशेत् माघःप्र०ऊर्जःकार्तिकः शुक्रोज्येष्ठः एषुगृहंप्रविशेदित्यर्थः आरंभोदितमास्वित्य
नेनतृणगृहस्यसर्वमासेषुविहितत्वात्प्रवेशोपिसर्वमासेषुविहितः तथाचनारदः प्रवेशोमध्यमोज्ञेयःसौम्यकार्तिकमासयोः माघफाल्गुनवैशाख

ज्येष्ठमासेषुशोभनइति तथाचज्योतिःप्रकाशे गृहारंभोदितैर्मासैर्धिष्ण्यैर्वारैर्विशेद्गृहमिति तथाचग्रंथांतरे विशेत्सौम्यायनेहर्म्यंतृणागारंतुसर्वदे
ति तथाचव्यवहारसारतत्वे सौम्यायनेश्रावणमार्गपौषेजमर्क्षलग्नोपचयांदशांशे वामंगतेर्कैग्रहवास्तुपूजांकृत्वाविशेद्वेश्मभकूटशस्तमिति॥१९
इदानीमपूर्वादिप्रवेशानाह प्रारंभोदितभैःगृहप्रारंभोदितैर्नक्षत्रैरपूर्वःप्रवेशःउदितःमुनींद्रैरित्यध्याहारः अत्रप्रारंभोदितभैरित्युपलक्षणं ते
नप्रारंभोदिततिथिमादिकंसर्वंग्राह्यं अपूर्वोनामनूतनगृहेप्रथमःप्रवेशउच्यते स्थिरैर्मैत्रैश्चनक्षत्रैः सपूर्वःप्रवेशउदितः सपूर्वोनामयात्रावसानेयः

प्रारंभोदितभैःप्रवेशउदितोपूर्वःसपूर्वस्थिरैर्मैत्रैश्चाच्युतमूलदस्रसहितैर्द्वारंभभैर्द्व्यात्मकः॥ कृत्यंवे-
श्मभवंदिवैवविहितंरात्रौप्रवेशःक्वचित्सूर्यर्क्षादिभपंचकंमनुमितादष्टप्रवेशेनसत् ॥ २० ॥७॥

क्रियते तथाचज्योतिःप्रकाशे अपूर्वःप्रवेशोगृहारंभधिष्ण्यैर्विधेयःकरोमध्यमात्रेतिकेचित् सपूर्वःस्थिरैर्मिश्रभैरेवशस्तैरतोन्योश्विमूलाच्यु-
तारंभधिष्ण्यैः वसिष्ठः अपूर्वसंज्ञंप्रथमंप्रवेशंयात्रावसानेचसपूर्वसंज्ञं द्वंद्वाह्वयंचाग्निभयादिजातंगृहप्रवेशंत्रिविधंवदंति अथगृहकृत्यविष
येदिनरात्रिविशेषनिर्णयमाह कृत्यंवेश्मभवमिति वेश्मभवंगृहभवंयत्किंचित्कृत्यंतद्दिवैवविहितंनरात्रौक्वचिद्दिवामुहूर्ताभावेसतिरात्रौप्रवेशो

विहितः नान्यत् तथाचवसिष्ठः दिवाप्रवेशः शुभदः सपुत्रपौत्राभिवृध्यैनिशिभास्करेंद्वोः बलेनमध्यध्वजवासरस्यरात्रिंविनासूर्यतिथिश्चरात्रीमि
ति अथकलशवास्तुशुद्धिमाह सूर्यर्क्षादिति सूर्यनक्षत्रादिभपंचक नक्षत्रपंचकंतथा सूर्यादिमनुमितानक्षत्रादष्टनक्षत्राष्टकंप्रवेशेनसत् नशुभंस्यात्
अन्यानिशुभानीत्यर्थात्सिद्धं अत्रपूर्वोक्तानांनक्षत्राणांशुभाशुभत्वंज्ञातव्यं ।। २० ।। अथप्रवेशेलग्नशुद्धिमाह उपचयस्थिरेलग्नेजन्मर्क्षे
जन्मलग्नाभ्यांउपचयावहस्थिरेलग्नेवेश्मप्रवेशः शुभः स्यात् कैः रविमुखैः सूर्यादिः प्रारंभवत्संस्थितैः गृहारंभार्थमुक्तंतद्वत्संस्थितैरित्यर्थः क

॥ लग्नेचोपचयस्थितैरविमुखैः प्रारंभवत्संस्थितैः सूर्येवामगतेसदिग्वदनभैर्वेश्मप्रवेशः शुभः ॥ रंध्रेषु—
द्विभवेभ्य आस्फुतगतः सूर्योयदास्यात्तदापूर्वाद्यान्नमालयंप्रविशतांस्याद्वामगोसौक्रमात् २१ इतिवास्तुप्रव्सरुत्तं॥

स्मिन्सति सूर्येवामगतेसति पुनः कैः स्वदिग्वदनभैः यद्दिङ्मुखंगृहंतद्दिन्मुखैः प्रवेशोदितैर्नक्षत्रैरित्यर्थः अथवामसूर्यलक्षणमाह रंध्रइति रं
ध्रेषु ८ द्वि २ भवे ११ भ्यः लग्नादिभ्यअष्टमपांचमद्वितीयैकादशेभ्यः सकाशात् ८ आस्फुगतः आपंचमगतः सूर्योयदास्यात्तदापूर्वाद्याननमाल
यंपूर्वादिमुखंगृहंप्रविशतांमनुष्याणांअसौसूर्यः क्रमाद्वामगः स्यात् एतदुक्तंभवति अष्टमात्पंचस्फुवर्तमानोर्कः पूर्वाभिमुखगृहेप्रविश-
तांवामोभवति पंचमात्पंचस्फुगतोदक्षिणामुखेगृहे प्रविशतांवामोभवतीत्यर्थः ॥ २१ ॥ इति स्वो० वास्तुप्रकरणं ॥ ७ ॥ ७ ॥

अथयात्राप्रकरणं व्याख्यायते तत्रादौकस्मिन्कालेयात्राकर्तव्येत्याह रुद्रशास्रु शोभनादशाअंतर्दशाविदशोपदशास्रु उपचयोवहस्य ग्रहस्यवारेगोत्रे
राष्टकवर्गादौरुभफलग्रहवारेप्रयाणमिष्टंरुभंजगुराचार्याः केषुकर्णात्यादितिभद्वीकेषुकर्णःश्रवणः अंत्यरेवती अदितिभंपुनर्वसुः एषांद्विकः श्र
वणधनिष्ठेरेवत्यश्विनौ पुनर्वसुपुष्यौ एषित्यर्थः पुनःकेषु मृगमैत्रार्केषु मृगःप्रसिद्धः मैत्रमनुराधाअर्कोहस्तः तेषुएषुनवनक्षत्रेषुप्रयाणंशुभमि-
त्यर्थः तत्रविशेषमाह नोजन्मभइति जन्मभेजन्मनक्षत्रेश्रवणाद्यन्यतमेपियानंशुभंनोजगुः अथयेषुअशुभंतान्याह सार्पेति सार्पमाश्लेषा

वारेचोपचयावहस्यरुद्रशास्विष्टंप्रयाणंजगुःकर्णांत्यादितितोद्विकेषुमृगमैत्रार्केषुनोजन्मभे ॥ सार्पाद्रा
ग्नियमाजपादपितृषुत्वाष्ट्रत्रयेचाशुभंरिक्ता ४।९।१४ पर्व १५।३० गुहा ६ ष्टमी ८ हरि १२ सितास्येपुज्ञशुक्रोन्मुखं ॥
१

आर्द्राप्रसिद्धा अग्निःकृत्तिकायमोभरणी अजैकपात्पूर्वभाद्रपदा पितरोमघा तेषुत्वाष्ट्रत्रयेचित्रात्रयेच एषुनवनक्षत्रेषुयानंअशुभंजगुः अ
न्यानिनवानक्षत्राणिमध्यमानीत्यर्थतःसिद्धं अथयास्रुतिथिषुअशुभंतदाह रिक्तेति चतुर्थीनवमीचतुर्दश्यःपर्वणिपूर्णिमामावास्ये गुहःषष्ठी अ
ष्टमीप्र॰हरिर्द्वादशी सितास्यंशुक्लप्रतिपत् तेषुप्रयाणंयानमशुभंजगुः अर्थादन्यास्रुतिथिषुशुभं अन्यदुष्टमाह ज्ञेतिज्ञोबुधःशुक्रःप्रसि
द्धः तयोरुन्मुखंसन्मुखंयानांज्ञकेषुपितिथिनक्षत्रादिषुअशुभंजगुः बुधशुक्रसन्मुखंगमनंकर्तव्यमित्यर्थः ॥ ३ ॥ ७ ॥ ७ ॥ ७

अथशूलानाह प्रागिति प्राक्पूर्वस्यांदिशिचंद्रासितशक्रभंत्यजेत् चंद्रः सोमवारः असितः शनिवारः शक्रभंज्येष्ठा एतत्त्रयंपूर्वदिशित्यजेदित्यर्थः
अपाक्दक्षिणस्यां वसुपराधात् धनिष्ठोत्तराधाते पंचनक्षत्राणि इज्योबृहस्पतिवारः एतान्दक्षिणस्यांत्यजेत् पश्चात्पश्चिमायांदिशिकार्कसितांत्य
जेत् कः रोहिणी अर्कोरविः सितः शुक्रः एतान्पश्चिमायांत्यजेदित्यर्थः उदक्उत्तरस्यांदिशिकुजबुधार्यम्णस्त्यजेत् कुजोमंगलवारः बुधः प्रसि
द्धः अर्यम्णनामोत्तराफल्गुनी एतान्शूलकान्उत्तरस्यांत्यजेत् शूलपदस्यप्रत्येकंसंबंधः अथयोगिनीमाह त्रिंशोष्टाविति एतान्प्रत्येक पदग-

॥ प्राक्चंद्रासितशक्रभंवसुपराधात्पंचभेज्यानपाक्पश्चात्कार्कसितानुदक्कुजबुधार्यम्णस्त्यजेच्छूलकान्॥
त्रिंशाष्टौनवभूमयोग्निगिरिताविश्वेषवोर्काकायः षट्शक्रास्तिथिपर्वतादशद्वशोष्येतांस्तिथीनीशतः॥२॥

तान्तिथीन् ईशतः ईशान्याः सकाशात् प्रदक्षिणक्रमेणजस्युः एतान्तिथींस्त्यजेत् एतेके त्रिंशा ३० ष्टौ ८ ईशान्यां नव ९ भूमयः १ प्राच्यां अग्नि
३ गिरिशाः ११ आग्नेयां विश्वेपइषवः ५ दक्षिणस्यां अर्का १२ ब्धयः ४ नैर्ऋत्यां षट् ६ शक्राः १४ पश्चिमायां तिथि १५ पर्वताः ७ वायव्यां दश १० द्व
श २ उत्तरस्यां अत्राकन्यासएवव्याख्यानं ॥ २ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथान्यन्निंद्यमाह ऐंद्रेति ऐंद्र्यादिषुदिक्षु अग्निभात् कृत्तिकायाः सकाशात् सप्तभगणेभवेत् एतदुक्तंभवति सप्तशलाकाचक्रंनिष्पाद्य पूर्वगतेसप्तसुरेखासु ईशानतः कृत्तिकादीनिसप्तनक्षत्राणिन्यसेत् तत्पुरस्थानिसप्तदक्षिणगतरेखासुन्यसेत् एवंपश्चिमोत्तररेखासुक्रमेणन्यसेत् ततोवायव्याग्नेयदिग्गतांरेखांकुर्यात् अस्यारेखायाः परिघइतिसंज्ञा एवंनिष्पादितेचक्रेप्रयोजनमाह वाय्वग्निकाष्ठास्थितइति वायुःप्रसिद्धः अग्निःप्रसिद्धः अनयोःकाष्ठेदिशोवायव्याग्नेयौ तत्रस्थितःपरिघोनोल्लंघ्यः अथान्यत्प्रयोजनमाह अपागिति अपाग्दक्षिणस्यांवरुणभैःप्रती

॥ ऐंद्र्याद्यग्निभसप्तसप्तभगणेवाय्वग्निकाष्ठास्थितोनोल्लंघ्यः परिघस्त्वपाक्वरुणभैःप्राच्यैरुदङ्नव्रजेत्॥
सर्वाशासुरवीज्यमित्रतुरगैर्यायाद्थावश्यकेहित्वाशूलमनिष्टभैर्यदिनिजाशेष्टांगलब्धिर्व्रजेत्॥ ३ ॥ ७ ॥

च्यैर्नक्षत्रैःव्रजेत् प्राच्यैर्नक्षत्रैःउदक्उत्तरस्यांदिशिव्रजेत्गच्छेत् तत्तद्दिक्स्थापितनक्षत्रैस्तत्तद्दिग्गमनंसिद्धमेव सर्वासुसर्वदिक्षुरवीज्यमित्रतुरगैर्यायात् रविर्हस्तः ईज्यःपुष्यः मित्रमनूराधा तुरगाश्विनी एभिर्नक्षत्रैः सर्वासुदिक्षुगमनंशुभमित्यर्थः अथावश्यकेकृत्येप्रयोजनमाह अथावश्यकेकृत्येप्रयोजनमाह अथावश्यकेइति आवश्यकेकृत्येसतिनिंद्यैःअनिष्टभैः यद्दिक्षुयानीनिंद्यानितैःपूर्वोक्तैर्नक्षत्रैस्तस्यांतस्यांदिशितदाव्रजेत् तदाकदा यदानिजाशेष्टांगलब्धिर्भवेत् निजाशायांनिजगमनदिशायांइष्टांगलब्धिः इष्टलग्नलाभःस्यात् इष्टलग्नंवक्ष्यमाणलक्षणं तद्य

योक्तं गुणसंपन्नंयदास्यात्तदागच्छेदित्यर्थः नोचेन्नेत्यर्थात्सिद्धं किंकृत्वाशूलभंहित्वापूर्वोक्तशूलनक्षत्रंत्यक्त्वाश्चलमक्षत्रेसतिनिजांशेष्टांगलब्धा
वपिनगच्छेदित्यर्थः ॥ ३ ॥ अथान्यदाह मिश्राख्यैरिति दिनादिमलवेत्रिधाविभक्तस्यदिनस्याद्यंशेमिश्राख्यैःसाधारणैर्नक्षत्रैःध्रुवभैश्चनइयात्
गच्छेत् द्वितीयभागेतीक्ष्णैः अंतिमेतृतीयभागेक्षिप्रैर्नक्षत्रैर्नयात् अथरात्रित्रिभागेषुक्रमशोमृदूग्रचरभैर्नयात् रात्रेःप्रथमेभागेमृदुभिः द्वि
तीयेभागेउग्रैः तृतीयभागेचरभैर्नयात् अथविशेषमाह श्रुतीति श्रुत्यर्केज्यमृगेषु अयंनियमोन श्रुतिःश्रवणः अर्कोहस्तः ईज्यःपुष्यःमृ

मिश्राख्यैर्ध्रुवभैदिनादिमलवेतीक्ष्णैर्द्वितीयेंतिमेक्षिप्रैर्नक्रमशोमृदूग्रचरभैरात्रित्रिभागेष्वियात् ।श्रुत्य
र्केज्यमृगेष्वयंननियमोवैश्वांत्यपादश्रवस्तिथ्यंशस्त्वभिजिद्गमेसफलदोयामींविनापिक्षणः ॥ ४ ॥ ७ ॥

गः प्रसिद्धः एभिर्नक्षत्रैः सर्वभागेषुगंतव्यमितिभावः अथाभिजिल्लक्षणंनस्फलंचाह वैश्वेति वैश्वमुत्तराषाढात्यस्यांत्यपादश्चतुर्थचरणः श्रव
णस्यआद्यस्तिथ्यंशः प्रथमःपंचदशांशः एतत्प्रमाणोअभिजित्स्यात् सोभिजिद्यामींदक्षिणांदिशंविनासर्वदिक्षुफलदः क्षणोमुहूर्तोपि अ-
जिद्यामींविनाफलदः यातॄणामभीष्टफलदोभवतीत्यर्थः ॥ ५ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथान्यदाह एकार्केंद्वयनानुकूलमिति अर्कश्चइंदुश्चतयोरयनं अर्केंद्वयनं एकंचतत् अर्केंद्वयनंचनत्तथा तस्यानुकूलंगतंगमनं अनिशं अहर्निश हितास्यात् भेदेसतिदिवारात्र्योः क्रमेणशस्तंस्यात् अयमर्थः सूर्योदिनस्वामी चंद्रोरात्रिस्वामी द्वौचेदुत्तरायणेस्यातांतदाहर्निशमुदग्गमनंशस्तंद्वौचेद्दक्षिणायनेभवतस्तदा अहर्निशंदक्षिणगमनंशस्तंस्यात् रात्रौचंद्रायनदिशंप्रतिगमनंशस्तंस्यात् अर्थादन्यथानशस्तंस्यात् अत्रप्राचीउत्तरसंबंधिनीज्ञेयातस्माद्यउदग्गमनंशस्तंतथाप्राग्गमनमपिशस्तंभवति तदाप्रतीचीगमनमपिशस्तंस्यात् तथाचरत्नकोशेदिनकरक

एकार्केंद्वयनानुकूलमनिशंभेदेदिवारात्र्योर्भौमेप्राक्शनिचंद्रयोर्गतिमपाक्पश्चाज्ज्ञगुर्वोर्हितं ॥ भृग्वर्कान्त्यकदगर्कभाद्यमगैस्तष्टद्विसप्तादलस्त्र्यंगाभ्यांविडलोनयोर्नगमनंश्रीदेवलोक्त्याहितं ॥ ५ ॥ रत्नमालाकारादावुत्तरांत्वपूर्वां यायाच्चकर्कटादौयाम्याशास्यंप्रतीचींच अथान्यदाह भौमेइति भौमेप्राक्पूर्वदिशिगतंगमनंहितंस्यात् शनिचंद्रयोरपाक्दक्षिणस्यां ज्ञगुर्वोःबुधगुर्वोः पश्चात्पश्चिमायां भृग्वार्कान्दिशक्ररविदिनेउदक्उत्तरस्यांगतंहितंस्यात् अथाडलविडलंचाह अर्कभादितिसूर्यनक्षत्राद्यभंदिननक्षत्रंअगैःसप्तमिस्तष्टंशेषितंसत् द्विसप्तद्वौवासप्तवायदाभवंतितदाडलःस्यात् त्र्यंगाभ्यांत्रिषट्संख्याकाभ्यांविडलःस्यात् अनयोरडलविडलयोःगमनंश्रीदेवलोक्त्यादेवलर्षिवचनेनहितंस्यात् ॥ ५ ॥ ७ ॥ ७ ॥ ७ ॥

अथवारशूलदोहदमाह रूगमं इनात्सूर्यवारात्सकाशात् आज्यादीनिप्राश्यप्रार्थयित्वाशूलेवारशूले यानंप्रयाणंअनर्थकृन्नोभवति अथदिग्दो
हदमाह आज्यमिति घृतादिकंप्राश्य ऐंन्द्यादिषुपूर्वादिषुहस्त्यादिभिर्यानंरूयानंभवति हस्तीप्रसिद्धः अनःशकटः हयोअश्वःनरःशिबि
कावात्यकः एतदुक्तंभवति घृतंप्राश्यहस्तिनाप्रागगमनात्सिद्धिः तिलान्नंतिलोदनंप्राश्यरथेनदक्षिणगमनात्सिद्धिः मत्स्यान्प्राश्यअश्वेनप

॥ आज्यंदुग्धगुडौतिलान्दधियवान्माषानिनात्प्राश्यनोशूलेयानमनिष्टमिंद्रककुभोऽथाज्यंतिलान्नंतिमी
न् ॥ दुग्धंप्राश्यचहास्त्यनोहयनरैर्यानंरूयानंतयोर्ध्यानाद्वाभवतिब्रुवेथहरिजंतिथ्याधिलक्षाधिकं ॥ ६ ॥

श्चिमगमनात्सिद्धिः दुग्धंप्राश्यनरैरुदग्गमनात्सिद्धिःस्यादित्यर्थः असतिसंभवेअभक्ष्येचनिर्णयमाह तयोर्भक्ष्यवाहनयोर्ध्यानाद्वायानं
रूयानंभवति अथलग्नशुद्धिंसहेतुकामाह ब्रुवेथहरिजमिति अथहरिजंलग्नं ब्रुवेवच्मि कथंभूतं तिथ्यादिलक्षाधिकं तिथ्यादिभ्योल
क्षाधि कंबलिष्ठमित्यर्थः ॥ ६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

स्वर्क्षानर्धिघटादिकं यात्रालग्नगतंत्यजेत् स्वर्क्षस्वराशिः अनर्धिः स्वराशेः अनुपचयभवनं घटः कुंभः अस्तभं अस्तगतग्रहस्यराशिः अनृजुग्रहं
वक्रग्रहस्यराशिः एतान् रिपोर्भात् वैरिराशेः षष्ठं अनृपृष्ठोदयं तथाच बृहज्जातके गोजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः क
थितास्त एवद्युति वृषमेषधनकर्कमकराः पृष्ठोदयाः स्वर्क्षांगेशरिपुं ऋक्षंच अंगंच ऋक्षांगे स्वस्यऋक्षांगं तस्येशः स्वामी तस्यरिपुः तंखलः प्रसि

स्वर्क्षानर्धिघटास्तभानृजुग्रहान् षष्ठं रिपोर्भादनृस्वर्क्षांगेशरिपुं खलं जनिबलत्यक्तं तथासांप्रतं ॥ यात्राल-
ग्नगतंत्यजेदथदिशामीनोर्कशुक्रौकुजोराहुर्मंदशशांकसौम्यगुरवः केंद्रेदिगीशेव्रजेत् ॥ ॥ ७ ॥ ॥७॥

द्धः जनिबलत्यक्तं जन्मनिबलहीनंग्रहं तथासांप्रतंप्रस्तुतंबलत्यक्तं इत्युक्तंसर्वंयात्रालग्नगतंत्यजेत् अथदिक्पतीनाह दिशामिति दिशांपूर्वादी
नांईशाः स्वामिनः अर्कशुक्रादयः पाठक्रमात्स्युः केंद्रेदिगीशे १।४।७।१० सतिव्रजेत् गच्छेत् यस्मिन्केंद्रेलालाटगत्वं भवतितात्केंद्रंवर्जयित्वाअन्यकें
द्रेदिगीशेसतिव्रजेत् इदमग्निमश्लोकेवक्ष्यति ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अथदिक्पतौललाटगत्वंतद्दिग्गमनंनिषेधंलालाटलक्षणंचाह दिक्पेललाटगेसतिनप्रवसेत् प्रवासन्नकुर्यात् तनौलग्नेवर्तमानइनः सूर्यः प्राक्प्राच्यांदि
शि भालगः ललाटस्थितः स्यात् मदनेसप्तमेवर्तमानोर्कजः शनिः पश्चिमस्यांललाटस्थितः स्यात् अंबुगबुधश्चतुर्थगतोबुधः सौम्यामुत्तरस्यांललाट-
स्थितः स्यात् खंदशमंतद्गतः कुजोभौमः अपाक्दक्षिणस्यांललाटस्थितः स्यात् द्वित्रिगतोगुरुः ऐश्यांईशान्यांललाटस्थितः स्यात् आयव्ययस्थः

॥ दिक्पेनप्रवसेल्ललाटग इनः प्राच्यांसनौभालगः स्यात्पश्चान्मदने ७ र्कजोंबुग ४ बुधः सौम्यांखगोपाक्कुजः ॥ ऐ-
श्यांद्वि २ त्रिगतोगुरुर्ज्वलनदिश्याय ११ व्यय १२ स्थौभृगुर्वायौषट् ६ स्मृत ५ गोविधुर्नैर्ऋतिदिश्यष्टांकसंस्थंतमः ८

भृगुः कविः ज्वलनदिशि आग्नेयांललाटगः स्यात् षट्स्मृतंगोविधुश्चंद्रः वायौवायव्यांललाट स्थितस्यात् अष्टांगसंस्थंतमः अष्टमनवमस्थानस्थोरा
हुः निर्ऋतिदिशिललाटसंस्थः स्यादिति ॥ ॥ ८ ॥ ॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥

वक्रीग्रहः केंद्रगतःसन् यातुर्गमनकर्तुर्नाशकरःस्यात् तदीयदिवसोपिवक्रग्रहस्यादिवसोपियातुर्नाशकरःस्यात् लग्नेस्यवर्गोपिनाशकरःस्यात् ज
न्मर्क्षलग्नेद्विपुः शक्रभोपित्तनुगोयातुर्नाशकरःस्यात् जन्मराशिजन्मलग्ने तयोःईशोतयोःरिपुः अथसूर्यादीनांजन्मनक्षत्राण्याह द्वीशेति अर्कतः
सूर्यंतःग्रहाणांद्वीशादीनिजन्मर्क्षाणिजन्मनक्षत्राणिस्युः द्वीशविशाखासूर्यस्य अग्निःकृत्तिकाचंद्रस्य अंबुपूर्वाषाढाभौमस्य अजःश्रवणोबुधस्य॥

वक्रीकेंद्रगतस्तदीयदिवसोलग्नेस्यवर्गोभवेद्यातुर्नाशकरःशक्रभोपित्तनुगोजन्मर्क्षलग्नेद्विपुः॥ द्वीशाग्न्यंबु
जभाग्यभानिगुरुभंपौष्णांतकेसार्पभंजन्मर्क्षाणिरवेरुपप्लवगतःखेटस्तनोर्हानिकृत्॥ ॥९॥ ॥

भाग्यंभपूर्वाफाल्गुन्यागुरोःगुरुःपुष्यःशक्रस्य पौष्णंरेवतीशनेः याम्यंभरणीराहोः सार्पमाश्लेषाकेतोःउपप्लवगतइति उपप्लवगतोनामयदीयभं
यस्यग्रहस्यभंजन्मनक्षत्रंहतंत्रिविधोत्पातहतंस्यादसौग्रहोलग्नेस्थितोहानिकृत्स्यात्॥ ॥९॥ ॥ ७ ॥ ७ ॥

सूर्यक्षाद्द्वितीयोराशिर्वेशिः ससौम्ययुतःसन् अंगगोलग्नगोतिशोभनःस्यात् जनुषिजन्मकालेसद्भिर्ग्रहैर्युतायेराशयस्तनुगता अतिशोभनाःस्युः जन्माआ
पचयस्थिताःजन्माब्जोजन्मचंद्रः तस्मादुपचयानित्रिषडेकादशदशमानि तेषुस्थिताग्रहास्तेतनुगता अतिशोभनाः तनोरपिजन्मलग्नादप्युपच-
यस्थलग्नगता अतिशोभनाःस्युः स्वर्क्षोच्चमित्रर्क्षगाः जन्मनियेस्वर्क्षगाः उच्चगाःमित्रर्क्षगास्तेपापा अपितनुगता अपिशोभनाःस्युः जन्मेश्वरो ज

वेशिःसौम्ययुतस्तनौजनुषियेसद्भिर्युताराशयोजन्माब्जोपचयस्थिता अपितनोःस्वर्क्षोच्चमित्रर्क्षगाः॥ पापा-
अप्यतिशोभनास्तनुगताजन्मेश्वरोकेंद्रगोस्वारात्यन्हितनौशुभोनफलदोमित्रान्हिपापोर्थदः॥ ॥ १०॥ ॥

न्मराशिजन्मलग्नस्वामिनोकेंद्रगोअतिशोभनोस्यातां स्वारात्यन्हिःस्ववैरिवारेशुभःशुभग्रहः तनौलग्नेवर्तमानोनफलदोभवति मित्रान्हिपापःतनौवर्त-
मानोर्थदःस्यात् तथान्यवनः रक्षकावर्धकाश्चैवयेस्युर्जन्मनिनायकाः तान्पापानपिनिःशंकोयात्रालग्नेनियोजयेदित्यादि॥ ॥ १०॥ ॥ ७ ॥

अथयात्रालग्नेइष्टस्थाननिर्दिशंश्चश्लोकेनैनेकेन्याह त्र्यायार्यन्यगताःखलाः त्र्या ३ या ११ रिभ्यः६अन्यानि १।२।४।५।७।८।९ ।१०।१२ तत्रगताःखलाः पापग्रहाः
खेदशमेइनजःशनिः त्र्यायार्यन्यगताःखलाइत्यनेनैवसिद्धेपिविशेषदुष्टफलज्ञापनार्थेखइनजइत्युक्तं अंत्या १२ घ १ षष्ठा ६ ष्ट ८ गोबूजश्चंद्रःभूयः
पुनःसचंद्रः अपचितःक्षीणचंद्रःकृष्णपक्षचंद्रः अस्तं ७ खां १० बु ४ स्रुत ५, गः अस्ते ७ शुक्रः इंज्योगुरुर्मृतौ ८ नष्टज्ञोस्तमितबुधोव्यय १२ गतः

त्र्यायार्यन्यगताःखलाःखइनजोबूज्ञोंत्याघषष्ठाष्टगोभूयःसोपचितोस्तखांबुस्रुतगःशुक्रोस्तइंज्योमृतौ॥
नष्टज्ञोव्ययगोग्रहान्वितशशीयातुर्महाविघ्नदा अन्यस्थानगताजयार्थस्रुखदास्त्याज्यंपुरोक्तंन्यचेत्॥ ११॥

ग्रहान्वितःशशी येनकेनापिग्रहेणग्रहाभ्यांग्रहैर्वायुक्तश्चंद्रमाः एतेप्रत्येकंयातुर्महाविघ्नदाःस्युः नानाप्रकारेणमरणंभंगादीन्ददतीत्यर्थः अन्यस्थानगताः उक्तेभ्योन्यस्थानगताःसंतस्तदाजयार्थस्रुखदास्रुः तदाकदाचेद्यदिपुरोक्तंत्याज्यंनस्यात्॥ ॥ ३३ ॥ ॥ ७ ॥

अथप्रतिबुधशुक्रापवादमाह स्वग्रामःप्रसिद्धः एकपुरंप्रसिद्धं आत्मसद्मआत्मगृहं चतुर्मुखेचतुर्वक्त्रेचतुःशालकंप्रसिद्धं उद्वाहाःविवाहाः ब्राह्म्या
दयःविवाहाः तेषुवधूप्रवेशः नववधूप्रवेशः नृपभीराजभयं दुर्भिक्षपीडाप्रसिद्धा तास्फुतीर्थस्वामिनीदेशयोः तीर्थेतीर्थगमनं स्वामिनिदेशःस्वाम्या-
ज्ञातयोःभृगुवसिष्ठात्र्यंगिरः काश्यपेभृग्वादिगोत्रसमूहे भारद्वाजजवात्स्ययोर्गोत्रयोः एषूक्तेषुसितज्ञोन्मुखं शुक्रबुधसंमुखंयानंगमनंहितंस्यात्
अत्रवधूप्रवेशेप्रतिशुक्रदोषोनोक्तः तत्तुभर्त्रासहगमनविषयं भर्त्राविनागमनेदोषोदृश्यते नवोढायास्तुवंध्यात्वमिति तथाचभीमपराक्रमे स्वामि

स्वग्रामेकपुरात्मसद्मसुचतुर्वक्त्रेचतुःशालकेतूद्वाहेषुवधूप्रवेशनृपभीदुर्भिक्षपीडासुच ॥ तीर्थस्वामिनि
देशयोर्भृगुवसिष्ठात्र्यंगिरःकाश्यपेभारद्वाजजवात्स्ययोहितकरंयानंसितज्ञोन्मुखं ॥ ॥१२॥ ॥७॥

नानीयमानायांप्रतिशुक्रोनविद्यतइति तथाचमतांतरे नवोढायास्तुवंध्यात्वंयदुक्तंसन्मुखेभृगौ तदत्रविबुधैर्ज्ञेयं केवलंतुद्विरागमेइति तथाच
लल्लः स्वभवनपुरप्रवेशेदेशानांविग्रहेतथोद्वाहे नववध्वागृहगमनेप्रतिशुक्रविचारणानास्तीति तथाचमत्स्यपुराणे चतुःशालंचतुर्द्वारैमिलिंदैः
सर्वतोयुतम् नाम्नातत्सर्वतोभद्रंनतत्रप्रतिशुक्रनेति तथाचवसिष्ठः काश्यपेषुवसिष्ठेषुभृग्वत्र्यंगिरसेषुच भारद्वाजेषुवात्स्येषुप्रतिशुक्रो
नविद्यतइति ॥ ॥१२॥ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथान्यंचापवादमाह चंद्रेपूषभमेषगेसतिसितःशुक्रः अधस्यात् तदासंमुखंयानंसत्शुभंस्यात् तथाचगर्गः पौष्णादिवन्हिभाद्यंशेयावत्तिष्ठ
तिचंद्रमाः तावदधोभवेच्छुक्रःप्रवेशेनिर्गमेशुभइति अथआवश्यकप्रवृत्तिमाह परपूर्वयोरिति परपूर्वयोःपश्चिमपूर्वयोःसितविपर्यासात्
शुक्रविपर्यासात् आवश्यकेकृत्येसतिपश्चिमांगच्छेत् पश्चिमकपालंगतेसतिपूर्वांगच्छेत् तथाचज्योतिःप्रकाशे अन्यत्रकेषुयावत्प्राक्क
पालस्थोभृगुर्भवेत् तावत्ताशिदिशंगच्छेत्प्राचींप्रत्यक्स्थितेनत्वयेति अथप्रयाणविधिमाह राजेति राजात्रिदिवसैरेकाब्धिषट्क्रोशकान्व्रजे

॥चंद्रेपूषभमेषगेसतिसितोधःस्यात्तदासन्मुखंयानंसत्परपूर्वयोःसितविपर्यासात्सदावश्यके॥

त् एतदुक्तंभवति प्रथमेदिनेक्रोशंगच्छेत् द्वितीयदिनेचतुःक्रोशान् तृतीयेषट्क्रोशान् अर्थात्सरतोयथेष्टंगच्छेत् कथंभूतःराजा तर्पितवन्हि
भूसुरसुहृत् वन्हिरग्निः भूसुराःब्राम्हणाः सुहृदोबांधवाः तेतर्पिताःवन्हिभूसुरसुहृदोयेनसतथा अत्रायंभावः समिच्चरुतिलादिनावन्हिंत
र्पयित्वादक्षिणान्नादिभिर्भूसुरांस्तर्पयित्वावस्त्रालंकारणादिभिः सुहृदःकलत्रादींस्तर्पयित्वाव्रजेदिति किंकुर्वन् स्नेहानुवृत्तिंत्यजन्सन् स्नेहेन
अनुवृत्तिंपुनःगृहागमनं अयंभावः यात्रार्थंबहिर्गत्वापुत्रादिस्नेहवशात्तदवलोकनार्थंगृहंनागच्छेदिति कथंभूतःराजादृप्तः बुभुक्षितोनगच्छे

दितिभावः पुनःकिंलक्षणःकार्यमनाःकार्यायउत्कंठितांतःकरणाः तथाचरत्नवल्यांस्वनिकेतात्सुरभवनात्प्रधानादाश्रमाद्गुरुगृहाद्वापि याया
त्कृताग्निकार्यःप्राश्यहविष्यंद्विजानुमतमिति तथाचबृहस्पतिः दैवज्ञंपूजयित्वातुविदुषःपूज्यशक्तितः प्रदक्षिणामिमान्कृत्वातिष्ठन्ध्यायेदु
मापतिमिति तथाचज्योतिःप्रकाशे संतोष्यस्वांगनांविप्रान्ज्ञत्याप्रतिरथादिकं शुचिःशुक्लांबरोष्णीषोनत्वेष्टं सुमनाव्रजेदिति तथाचकश्यपः
यात्रासमयेवृत्यानुपरागेग्रहस्यवैषम्ये गोभूहिरण्यवस्त्रैःसंपूज्यश्रद्धयाचदैवज्ञमिति बृहद्यात्रायां स्नातोभुक्तोनुलिप्तश्चसर्वालंकारभूषि

राजातर्पितवन्हिभूसुरसुहृत्स्नेहानुवृत्तिंत्यजन्तुष्टःकार्यमनाव्रजेत्त्रिवसैरेकाब्धिषट्क्रोशकान् ॥ १३ ॥

तः शुक्लांबरधरस्त्रीमानध्वगःसुखमेधतइति भूपालवल्लभे ब्राम्हणान्नावमन्येतकोपयेन्ननिजांगनां यात्रांकृत्वागृहेनैवसिद्धिकामोविशेद्गृ
हमिति लल्लः यात्रायांप्रस्थितोयश्चब्राम्हणानवमन्यते तदंतंजीवितंतस्यनासौप्रतिनिवर्ततइति बृहद्यात्रायां यस्तुसंप्रस्थितोयात्रांस्व-
भार्यांनाभिनंदति भार्यावानाभिनंदेतनास्यप्रतिनिवर्तनमिति तथाचरत्नावल्यां क्रोशंवायदिवाप्यर्धंप्रथमेहनिवासयेत द्वितीयेयोजनंग
त्वानिवसेतमहीपतिः तृतीयेयोजनंसार्धंवसेदाक्रम्यदूरतः ततःपरंयथेष्टंतुयायान्मार्गंमहीश्वरइति ॥ छ ॥ छ ॥ छ ॥

अथयात्रिकस्यनियमानाह क्रोधःप्रसिद्धः क्षौरंप्रसिद्धं रतिर्मैथुनं श्रमःक्लेशः आमिषंमांसं गुडःप्रसिद्धः घृतंघृतरमणं अश्रुअश्रुमोचनं दुग्धंप्र
सिद्धं आसवोमद्यं क्षारंक्षारधान्यमाषादि अभ्यंगस्तैलाभ्यंगः भयंशंकारिपुभयमित्यर्थः असितांबराणि अशुभ्रवस्त्राणि रक्तकृष्णादीनि
वमिर्वमनं तैलंप्र॰ कटुमरीचादि इत्येतद्गमेगमनेउज्झेत् त्यजेत् अथउक्तेषुकिंकिंकतिदिनंत्यजेदित्याह क्षीरेति क्षीरक्षौररतीक्रमात् त्रि
३ शर ५ सप्ताहं ७ त्यजेत् क्षीरंदुग्धंत्र्यहं ३ क्षौरंशराहंपंचाहं ५ रतिंसप्ताहंत्यजेदित्यर्थः परंउर्वरितंतद्दिनेप्रयाणदिनेत्यजेत् रोगंव्याधिंयाव
द्बाधंत्यजेत् स्त्र्यार्तवंबीजदानपर्यंतंत्यजेत् सितान्यतिलकं श्वेतव्यतिरिक्तंतिलकंपीतकौंकुमादिकंतद्दिनेत्यजेत् प्रस्थानकेपिइत्येतत्त्यजेत्

क्रोधक्षौररतिश्रमामिषगुडघृताश्रुदुग्धासवक्षाराभ्यंगभयासितांबरवमिस्तैलंकटूज्झेद्गमे ॥ ॥

प्रस्थानकंनाममुहूर्तसमयेकिंचिदभीष्टवस्तुचालनम् तदुक्तं रत्नमालायां छत्रायुधाद्यंमनसस्त्वभिष्टंप्रचालयेद्दैजैकंजयार्थीति एतत्तुका
र्यवशात्क्रियते प्रस्थानेसंपूर्णफलंनास्ति तथाचरत्नकोशे कार्यवशात्स्वयमगमेभूभर्तुःकेचिदाचार्यः छत्रायुधाद्यभिष्टंवैजयिकंनिर्ग
मेकुर्युरिति तथाचगर्गः स्वशरीरेणयःकश्चिन्निर्गच्छन्श्रद्धयान्वितः तस्ययात्राफलंसर्वंसंपूर्णंपथिसिध्यती तिनचालनावधिर्नथांतरा
त् गृहाद्गृहांतरंगर्गआहसीमांतरंभृगुः शरक्षेपाद्भरद्वाजोवसिष्ठोनगराद्बहिरिति एवंप्रस्थानेकृतेपिस्वयमन्यस्मिन्शुभदिनेगच्छेत् तथाच-

ज्योतिःप्रकाशे प्रस्थानेपिकृतेनैयान्महादोषान्वितेदिने गर्भयोगंविनाकालदृष्ट्यादौचाप्लुतेतथेति रत्नमालायां वसेन्नचैकत्रदशक्षितीशो
दिनानिनोसप्तचमंडलीकः यःप्राकृतःसोपिचपंचरात्रंभद्रेणयात्रापरतःप्रयोज्येति एवंविधेप्रस्थानेपिक्रोधक्षौररत्या दीन्वर्जयेदित्यर्थः ग
गःक्रोधंक्षौरंतथावांतिंतैलाभ्यंगाश्रुमोक्षणं घृतंमांसंगुडंतैलंयानेमद्यंपरित्यजेदिति रत्नप्रकाशे कालीयकंहिंगुलकःकुंकुमंरक्तचंदनं पीतं

क्षीरक्षौररतीःक्रमात्त्रिशरसप्ताहंपरंतद्दिनेरोगंस्त्र्यार्तवकंसितान्यतिलकंप्रस्थानकेपीतिंच ॥ १४ ॥ ७॥

रक्तंचवसनं यातुर्नैष्टानितत्क्षणादिति बृहद्यात्रायां कटुतैलगुडक्षारपक्वमांसाशनंतथा भुक्त्वायोयातिमोहेनव्याधितःसनिवर्तते लग्नः
प्रमत्तोव्याधितोभीतःश्रांतःक्रुद्धोबुभुक्षितः अध्वानंनप्रपद्येतक्लीबवेषस्तथैवच रत्नावल्यां स्वकीयांपरकीयांवास्त्रियंपुरुषमेववा ताडयित्वातु
योगच्छेत्त्वरितंतस्यजीवितमिति भृगुः त्रिरात्रंवर्जयेत्क्षीरंपंचाहंक्षुरकर्मच तदहश्चावशेषाणिसप्ताहंमैथुनंत्यजेदिति यात्रायागमनलक्षणं

गर्गोक्तिंज्ञेयं मुहूर्तसमयेप्राप्तेहंसचारांघ्रिणात्यजेत् दैवज्ञामात्यविप्राद्यपुरोगैःस्वजनैर्वृतःपूर्वदक्षिणमुत्थत्यपादंयात्रांनराधिपः द्वात्रिंश-
तपदंगत्वायानमारुत्यसंव्रजेत् ततोनिरीक्षयेत्सम्यक्शकुनांश्चशुभाशुभात् तथैवसदसच्छब्दान्निमित्तानिचसंव्रजेदिति ॥ १५॥ इदानीं
शकुनानाह वस्त्राणिश्वेतवस्त्राणि अथान्यपक्षशकुनमध्येपठितानि अलंकरणानि सुवर्णादिनिर्मितानिभूषणानीत्यर्थः पूर्णकलश
:प्रसिद्धः तौर्यध्वनिःवाद्यध्वनिःपुत्रवान्वर्धमानःपुरुषः शंखःप्र॰आदर्शोमुकुरः नृपोराजा अश्वःप्रसिद्धः दंतीहस्ती सुरभिर्गौः स्त्रीसौ

वस्त्रालंकारणानिपूर्णकलशस्तौर्यध्वनिःपुत्रवान्शंखादर्शनृपाश्वदंतिसुरभिस्त्रीपुष्पधान्यादिच ॥ दो-
लादीपविधूमवन्हिसुरभिद्रव्याणिशुभ्रोवृषोवेश्याछत्रवितानचामरकुमार्योमीनगोरोचने ॥ १५ ॥७॥

भाग्यवतीपुष्पाणिश्वेतानि धान्यानिअकृष्णानि कृष्णानित्वपरशकुनमध्येपठितानि आदिशब्देनसुवर्णादिधातवः दोलाप्र॰दीपःप्र॰विधू
मवन्हिःधूमरहितोवन्हिःसुरभिद्रव्याणिसुगंधद्रव्याणि कर्पूरचंदनादीनि शुभ्रोवृषःश्वेतवृषभः वेश्याप्र॰ छत्रंप्र॰वितानंवस्त्रनिर्मितं
चामरंप्र॰ कुमारीप्र॰ मीनोमत्स्यःजलादुत्थितःगोरोचनंप्रसिद्धं ॥ १५ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथसंकोचेनाह यद्यद्वस्तुस्वांतनितांततोषकरणं स्वांतं अंतःकरणं तस्यनितांतं अतिशयंतोषकरणं संतोषजनकंतत्तत्किंबहुनोक्तेन ॥ एवं
संकोचेनोक्तेदानींयेषुसंकोचाभावः तानिपूर्वाचार्यैः शकुनमध्येपठितानितान्याह कोरुद्धृतंगोमयं कोःपृथिव्याःउद्धृतंगोमयं मृच्चपृथिव्याः
उद्धृतामृत्तिका अंभोर्थघटान्वितःसहचरः उदकार्थकुंभयुक्तोजनःसन्सहचरःसहचरतीतिसहचरः जलार्थीरिक्तकुंभस्तुपथिकेनसहव्र
जेत् निवर्ततेयथापूर्णःकृतार्थःपथिकस्तथेत्यक्तत्वात् धौतांबरोमैत्रकः धूतवस्त्ररजकः दूर्वाप्र० दर्भःप्र० दूर्वादर्भौतृणे अपिशुभे अपश
कुनमध्येयत्तृणंपठितंतदेतद्व्यतिरिक्तम् रथःप्र० पलंमांसं अस्त्रंरक्तं मदिरामद्यं वर्णीब्रम्हचारी गुरुःप्र० देवविज्योतिषीविप्रौद्वौब्राम्हणौ मि

यद्यत्स्वांतनितांततोषकरणंकोरुद्धृतंगोमयंमृच्चांभोर्थघटान्वितःसहचरोधौतांबरोमैत्रकः ॥ ॥

त्रंइष्टः मृगःप्र० अरोदनंशावंरोदनरहितंप्रेतं सिद्धार्थागौरसर्षपाः दुग्धादिदुग्धदध्याज्यं ननुयद्यत्स्वांतनितांततोषकरणमित्यनेनदुग्धं
ग्रहणत्वात्सिद्धं पुनःकिमुक्तं दुग्धमिति सत्यं दुग्धंभक्षणेनिषेधितं तत्संदेहनिवृत्त्यर्थंदुग्धपठनमित्यदोषः एवमेवात्रविचारणीयं तथा
चवसंतः दध्याज्यदूर्वाक्षतपूर्णकुंभसिद्धान्नसिद्धार्थकचंदनानि आदर्शशंखामिषमीनमद्यगोरोचनागोमयमुद्धृतंगोरिति भारद्वाजः
राजाविप्रोसमृद्धद्वेश्यासपुत्रास्त्रीकुमारिका अभिरूपोनरोस्त्रीवागजोवीजीवृषःसितः रज्वाधृतान्यवर्णैःगोःसवत्साचविशेषतःउद्धृतं

गोमयंनीतंमृत्तिकाचोद्धृतातथा रजकोधौतवस्त्रश्चवेश्यातौर्यत्रिकध्वनिः जयमंगलशब्दाश्चशांतिपाठः सदीपकाः दीपोवाप्रज्वलद्व
न्हिः पूर्णकुंभंनृपासवाः मद्यंमांसंचरुधिरंभक्ष्याणिविविधानिच इक्षवोमधुतांबूलंवस्त्रालंकरणानिच रौप्यंताम्रंमणिंस्वर्णंद्रव्यंद
र्पणमक्षताः वितानंचामरंछत्रंदूर्वादर्भतृणध्वजाः दोलाचारुरथोवृद्धः पुत्रपौत्रार्थयुक्शुचिः चंदनानिस्रग्गंधीनितथापुष्पाणिरोच–
ना घृतंदधिपयःपेयासिद्धमन्नंवचःशुभं दैवज्ञःसगुरुर्देवश्चित्तोत्साहकराणिच दृष्टैतानिनरोयायात्सर्वार्थंलभतेतुसः इति ॥ १६ ॥

दूर्वादर्भरथाःफलास्त्रमदिरावणीगुरुर्दैवविद्विप्रोमित्रमृगावरोदनशवावंसिद्धार्थदुग्धादिच ॥ १६ ॥ कुर्वन्द
क्षिणतःसदेतदितरद्वामेप्रकुर्वन्व्रजेद्भस्मास्थींधनविट्तुषाश्मलवणोपानत्तृणायस्कराः ॥ पिण्याकौषध–
कृष्णधान्यरुदनंतक्रंसधूमानलःकार्पासारुणपुष्पचर्मचगुडस्तैलायसीकर्दमः ॥ १७ ॥ ७ ॥ ७ ॥

एतत् अनंतरोक्तंसत् शुभंदक्षिणतः दक्षिणभागेकुर्वन्सन् इतरत् अशुभंवक्ष्यमाणंवामेकुर्वन्सन्व्रजेत् गच्छेत् अथाशुभमाह भस्मे–
ति भस्मप्रसिद्धं अस्थिप्रसिद्धं इंधनंप्रसिद्धं विट् विष्ठा तुषंधान्यादीनांत्वफल्गु अश्मापाषाणः लवणंसामुद्रिकं उपानहौप्रसिद्धौ तृणं–
प्र० अयस्करोलोहकरः पिण्याकंमर्दिततिलाः औषधंप्र० कृष्णधान्यंमाषादि रुदनंरोदनादि तक्रंप्रसिद्धं सधूमानलः धूमसहितोग्निः का

र्पासः प्र० अरुणंपुष्पंजपादि चर्मप्र० गुडःप्र० तैलंप्र० अयोलोहं कर्दमःपंकः ॥१७॥ मत्तउन्मत्तः वांतःवमितः बुभुक्षितःप्र० अंतकःप्राणिहिं
सकः खलोदुर्जनः मुंडीमुंडितः जटीजटिलः व्याधितोरोगी खंजःपादेनखंजः व्यंगोंगहीनः दिगंबरोनग्नः यतिःसन्यासी अरिर्वैरी कषा
यीगैरिकरंजितवस्त्रः मुक्तालकोमुक्तकेशः चौरःप्र० अभ्यक्तः तैलाभ्यक्तः मलाविलोमलिनः पतितोजातिभ्रष्टः पाशीप्राणिबंधार्थपाश
वान् अर्गलीअर्गलावान् गुर्विणीसगर्भा वंध्यानिरपत्या कृष्णवृषः कृष्णोनड्वान् अहिःसर्पः भेकोमंडूकः सरटःप्रसिद्धः गोधाप्रसिद्धा

॥ मत्तोवांतबुभुक्षितांऽतकखलामुंडीजटीव्याधितःखंजव्यंगदिगंबरायतिररिःकाषायिमुक्तालको ॥ चौराभ्यक्त
मलाविलाश्चपतितःपाश्यर्गलीगुर्विणीवंध्याकृष्णवृषाहिभेकसरटोगोधावराहःशशः ॥ १८ ॥ जाहोतूमहिषः
खरोष्ट्रमहिषारूढश्चरिक्तोघटःछिक्काप्राणिशिरोगकंपपदवीबंधाःकुवागाहवौ ॥

वराहःप्रसिद्धः शशःप्रसिद्धः ॥१८॥ जाहःमंडली लोकेसेहलीतिप्रसिद्धा जाहकोगात्रसं कोचीमंडलीचबुधैः स्मृतइतिहलायुधः ओतुर्मार्जारः
महिषःप्र० खरोष्ट्रमहिषारूढाः प्रसिद्धाःरिक्तोघटःप्र० छिक्काक्षुतं प्राणिशिरोगकंपः प्राणिनोंगोक्षादीनां प्राणिनांशिरोज्झाटनं अंगझाटनं
वा पदवीबंधोमार्गबंधः ऊर्णनाभादिभिःमार्गोबध्यते कुवाकुत्सितवाक्यश्रवणं आहवःसंग्रामोबिडालमहिषादीनांपातःपतनं वस्त्रादी

नास्खलनं यानमश्वादितस्य फलायनं स्वकलहः श्वनांकलहः षंढंनपुंसकं गोक्षुतंप्र॰ ज्वलद्वेश्मज्वलद्गृहदर्शनं इत्येतेपशाकुनाः प्रति
बंधकाः कार्यप्रतिबंधकाःस्युः छिक्कादिकाअपशाकुनामृत्युदाःस्युः तथोक्तमागमांतरे तृणतैलारिकार्पासभस्मचर्मतुषौषधं सामुद्रंगुडपंका
हिमत्तंवांतबुभुक्षितमित्यादि ॥१९॥ अथशाकुनांतरमाह भृंगोभ्रमरः अलिर्वृश्चिकः उष्ट्रः प्रसिद्धः परभृतकाः शब्दंकुर्वाणोराजक्रतुकाः नाखि



पतनोयानमपलायनंस्वकलहःषंढंक्षुतंगोर्ज्वलद्वेश्मेतिप्रतिबंधकाःकुशाकुनाश्छिकादिकामृत्युदाः ॥१९॥भृं-
गाल्युष्ट्रपरभृकाश्वनखिनःस्त्रीसंज्ञकावामतः कालीकुक्कुटपुंप्रथाश्वस्वरैभिर्दक्षेमनोभीष्टदाः॥ भारद्वाज-
शिखंडिचाषनकुलाहंसोजएतेदर्शयाताइष्टफलाः स्युर्रासभरवोवामेपिपृष्ठेर्थदः ॥ २० ॥ ७ ॥

नः श्वानादयःस्त्रीसंज्ञकाः चटकादयः एतेवामतः मनोभीष्टदाःस्युः कालीमहिषीकुक्कुटः प्रसिद्धः पुंप्रथाःपुरुषसंज्ञकाः काकादयः स्वरैभिर्गौः
एतेदक्षेमनोभीष्टदाःस्युः भारद्वाजः प्र॰ शिखंडीमयूरः चाषप्र॰ नकुलोबभ्रुः हंसः प्र॰ अजोबस्तः एतेभारद्वाजादयः दर्शयाताःसंतः इष्टफलाः
स्युः अयमर्थः भारद्वाजादयोवामेवादक्षिणेवाग्रेवादृष्टमात्राइष्टफलाः अभीष्टफलदाभवंतीत्यर्थः रासभरवोगर्दभध्वनिर्वामेपृष्ठेपिअर्थदः अभीष्ट
र्थदोभवति ॥ २० ॥

अथयेषुयेषुकृत्येषुविपरीतशकुनाःशुभाश्चतानाह नद्युत्तारोनदत्तरणंभयंनृपादीनां प्रवेशोग्रामादिप्रवेशः समरः संग्रामः द्यूतंप्र०
नष्टेक्षणं नष्टवस्तुनःअवलोकनं व्याधौरोगोपचारे एषुविलोमशकुनाविपरीतशकुनाःशुभदाःस्युः अयमर्थः गमनेयेपशकुनाःस्ते-
नद्युत्तारादिशुभदाःस्युरित्यर्थः तथाइडाग्रानाड्याभरे पूर्णतायांविलोमशकुनाःशुभदाःस्युः तथाचवसंतः भवेदिडायांपरिपूरितायांसव्यो

नद्युत्तारभयप्रवेशसमरद्यूतेषुनष्टेक्षणेव्याधौस्युःशुभदाविलोमशकुनानाड्याइडायाभरे ॥ ॥

पिवामः शकुनःप्रशस्तः स्यात्पिंगलायांपरिपूरितायांसव्योपसव्यः शकुनःप्रशस्तः संगेरणेकर्मणिचप्रवेशेशुक्लेग्रहेनष्टविलोकनेच ॥
व्याधौसरिदुर्गवनादिकेषुशस्तःप्रयाणाद्विपरीतभावइति अन्यच्च नद्युत्तारेभयेयुद्धेप्रवेशेनष्टवीक्षणे शकुनाव्येस्तगाः शस्तान्नृपालो
केप्रयाणवदिति अथप्रथमेअपशकुनेजातेसतिकिंकर्तव्यमाह आद्येति आद्येप्रथमेदुःशकुनेजातेसतिनिवृत्यनिवर्तनंकृत्वातत्रस्थु

चौदेशेउपविश्यशुचिःप्रक्षालितपाणिपादःआचांतःकृताचमनः असवःप्राणास्तेषांआयमःप्राणायामःअष्टधाअष्टवारंकृत्वाइयात्गच्छे
त् चेद्यदिपुनःदुःशकुनःस्यात्तदानिवृत्यशुचिराचांतोऽष्टवारंषोडशवारंअसून्नियम्येयात् अपरेतृतीयेदुःशकुनेजातिसतिस्ववर्णंद
त्वाइयात् एतदावश्यकगमनविषयं प्राणायामानधिकारीतावत्कालंस्थित्वाव्रजेत् तथाचज्योतिर्निबंधे विरुद्धेशकुनेपूर्वंप्राणायामा

आद्येदुःशकुनेनिवृत्यचशुचिर्भूत्वाष्टधासायमंकल्पयेत्‌पदपरेष्टिवारमपदेदत्वास्ववर्णंव्रजेत् ॥२१॥
इतिश्रीमदनंताख्यचातुर्मास्ययाजीनारायणविरचितेमुहूर्तमार्तंडेयात्राप्रकरणंसमाप्तं॥ ७ ॥ ७॥

ष्टकंचरेत् द्वितीयेगुणवान्कृत्वातृतीयेनव्रजेत् क्वचिदिति तथाचवसंतराजः जातेविरुद्धेशकुनेध्वनीनोव्याकुत्यकृत्वाकरपादशौचं
आचम्यचक्षीरतरोरधस्तात्तिष्ठन्प्रपश्येच्छकुनांतराणीति तथाच आर्ष्टिषेणः यदापशकुनंपश्येद्विपरीतमुपस्थितं सघृतंकांचनं
दत्वानिर्विशंकःस्वखंव्रजेदिति॥ २१॥ इतिमुहूर्तमार्तंडटीकायांमार्तंडवल्लभायाम्यात्राप्रकरणंसमाप्तं॥ ७ ॥ ७ ॥ ७ ॥

अथमिश्रप्रकरणंविवक्षुरादौराजाभिषेकंवृत्तार्धेनाह जन्मांगर्क्षदशेशादिभिर्बलिष्ठैः तथामृदुध्रुवादिभैः स्थिरर्धिन्नृतनौव्यापारान्हिभूप
स्थितिः शास्तास्यादित्यध्याहारः अंगंचऋक्षंचअंगर्क्षेजन्मनिअंगर्क्षेजन्मांगर्क्षेजन्मलग्नजन्मरा शीतेचदशाचजन्मांगर्क्षदशाः दशा
वर्तमानातस्याईशाः तेचसप्तग्रहाश्चकुजश्चसूर्यश्चतेचतैःसार्कैः अर्कोरविः तेनसहबलिष्ठैःस्थानादिबलसमृद्धैःसद्भिः तथामृदुक्षिप्रेंद्रध्रु
वभैस्पष्टं स्थिरर्धिन्नृतनौऋक्षिगतान्नृतनुः ऋद्धिन्नृतनुः स्थिराचासौऋद्धि नृतनुश्चसातथातस्यां जन्मराशिजन्मलग्नाभ्यांस्थिरोपचयन्नृ

जन्मांगर्क्षदशेसद्ग्रहकुजैः सार्कैर्बलिष्ठैर्मृदुक्षिप्रेंद्रध्रुवभैः स्थिरर्धिन्नृतनौव्यारान्हिभूपस्थितिः ॥ स्वस्व-
र्क्षैःसमृदुध्रुवक्षचरभक्षिप्रैःस्मरस्थापनंप्रोचुर्माघयुगेचराधयुगुलेव्यारान्हिपूर्वाह्णिके ॥ १॥ ७ ॥

लग्ने व्यारान्हिभौमरहितदिनेभूपस्थितिःराजप्रतिष्ठाशुभास्यादित्यर्थः लग्नबलंप्राग्वत् प्रायश्चंद्रंत्यजेत्याद्यवलोकनीयं अथदेवस्था
पनमुत्तरार्धेनाहस्वस्वर्क्षैरिति स्वस्वर्क्षैः यस्यदेवस्यप्रतिष्ठाक्रियतेतस्यनक्षत्रैः समृदुध्रुवर्क्षचरभक्षिप्रैः शेषंस्पष्टंमाघयुगे माघफाल्गुन
योः तथाराधयुगुले राधोवैशाखः तस्माद्युग्मुगुलंतस्मिन् वैशाखज्येष्ठयोरित्यर्थः तथा व्यारान्हिविगतःआरोयस्मात् एवंविधंअहः
तस्मिन् भौमरहितदिनइत्यर्थः पूर्वाह्णिके अत्रदिनस्यद्वौभागौ पूर्वभागःपूर्वाह्णः तस्मिन् आचार्याःस्मरस्थापनंप्रोचुः शेषंस्पष्टं सर्वामरस्थापन
मितिशेषः लग्नबलंप्राग्वत् ॥ १॥

अथवस्त्रपरिधानंतस्यक्षालनं उंदुरादिभक्षितफलंचाह वसुर्धनिष्ठा अदितिःपुनर्वसुः इनपंचहस्तपंचकंगुरुभंपुष्यः अश्वि अश्विनी ॥
अंत्येरेवती ध्रुवाणिपूर्वोक्तानि एतैर्नक्षत्रैःज्ञत्रयेबुधगुरुशुक्रवारे अंबरंवस्त्रंधार्यं नान्यत्र यतउक्तं रवौजीर्णंविधौज्ञेयंजलार्द्रंदुःखदं
कुजे बुधेधनंगुरौज्ञानंशुक्रेसौख्यंशनौमलमिति लग्नबलंप्राग्वत् अथक्षालनमाह इहास्मिन्वस्त्रधारणोक्तनक्षत्रादौक्षाल्यंप्रक्षाल-
नीयं कथंभूतेज्ञाने बुधवाररहिते उक्तंच वस्त्रहेमाद्यलंकारधारणोक्तेश्वभादिभिः तत्संहतिश्चनिर्माणंविदध्यात्क्षालनादिकमिति॥यद्यपि

धार्यंवस्त्रदितीनपंचगुरुभाद्व्यंत्यध्रुवैर्ज्ञत्रयेज्ञोनेक्षाल्यमिहाखुभक्षितमसन्मध्यत्रिभागेंबरे ॥

स्यांगंयदद्रोगिनोगदितभेकुर्यादितिपूर्वमेव अंगभूतंकर्मोक्तं तथापिक्षालनेबुधवर्जनार्थंज्ञोने इहक्षाल्यमित्युक्तं बुधनिषेधश्रव-
णात् उक्तंच शनौसोमसुतेश्राद्धेषष्ठ्यामावास्ययोस्तथा वस्त्राणांक्षालनंचैवदहत्यासप्तमंकुलमिति अथोंदुरादिभक्षितफलमा
ह आखुभक्षितमिति आखुःइंदुरः तेनअंबरंमध्यत्रिभागेभक्षितंअसत् दुष्टफलंस्यात् एतदुक्तंभवति वस्त्रंत्रिगुणंकृत्वायदि-
भक्षितभागोमध्यत्रिभागेपततीति तदातद्दुष्टमित्यर्थः आखुरित्युपलक्षणम् तेनाग्निदग्धंगवादिभक्षितंमष्यादिलिप्तंज्ञेयम् ॥

तथाचोक्तं रत्नशाते दग्धंवास्फुटितंचगोमयमषीपंकैर्विलिप्तंतथा दष्टंमूषकपूर्वकैरशुभंदंमध्यत्रिभागेशुभमिति अथस्त्रियारक्तव
स्त्रधारणंभूष णधारणं अनुक्तग्रहाणांकुत्रकुत्रप्राशस्त्यंतदुत्तरार्धेनाह स्त्रीति स्त्री अत्रउक्ते वस्त्रधारणभादौ अंबरंभूषणंस्वर्णादि
भूषणंबिभृयात् धारयेत् कथंभूतेव्यादित्यपुष्यध्रुवेविगतानि आदित्यपुष्यध्रुवाणियस्मात्ततथातस्मिन् यतोत्रस्त्रियारक्तवस्त्रभू

स्त्रीरक्तांबरभूषणेत्रबिभृयाद्व्यादित्यपुष्यध्रुवेश्वेतोब्जोरुणरुक्मयोःकुजरवीकृष्णेशनिःशस्यते २

णधारणेदोषोदृश्यते तथाचोक्तं पुष्यादित्यध्रुवैर्धिषायैःस्वर्णरक्तांबरादिकम् नवीनंभूषणंधार्यंनार्यादयितुरायुषेइति लग्नब
लंप्राग्वत् अथचंद्रादीनांप्राशस्त्यमाह श्वेतेवस्तुनिरौप्यमुक्ताफलादिके अब्जश्चंद्रोहितः सोमवारेश्वेतवस्तुधार्यमित्यर्थः कु-
जरवीअरुणरुक्मयोःशस्येते शनिःकृष्णेवस्तुनिनीलवस्त्रादिकेशस्यते शनौतद्धार्यमितिभावः ज्ञत्रयेतुसर्वंधार्यमितिपुरैवो
क्तम् २

अथनराणांभूषणधारणंवृत्तचरणेनाह वस्त्रोक्तैर्भादिभिर्वस्त्रादिनीत्यत्रोक्तेअंगेस्थिरलग्नेनुः नरस्यअलंकृतिरलंकरणंहितंस्यात्॥ किंलक्षणैर्वस्त्रोक्तैः व्यनिलदूयाश्विभिः अनिलदूयंस्वाती विशाखेति अश्विनीप्र॰ विगते अनिलदूयाश्विनौयेभ्यस्तानितथात स्मिन् स्वातीविशाखाश्विनीरहितै रित्यर्थः लग्नबलंप्राग्वत् अथद्वितीयचरणेनविशेषमाह विप्राज्ञेति विप्राज्ञाब्राम्हणाज्ञा उत्सवोविवाहादिकः लब्धिर्लाभः आस्कृसत्कृ अनुक्तेपिभादौधारणंवस्त्रादिधारणमिष्टकृत्स्यात् तथाचोक्तंव्यासेन लब्धंराजप्र

॥ वस्त्रोक्तैर्व्यनिलद्वयाश्विभिरगेगेनुर्विभूषाहिताविप्राज्ञोत्सवलब्धिषुदितमनुक्तेपीष्टकृत्स्यारणं॥
॥ मैत्रार्कानिलमूलदस्रहरिभेहीज्यांजपादोत्तरे पण्यानांक्रयविक्रयौघटपरध्र्यंगेस्वशुद्धौतनु॥३॥

सादेनविप्रादेशात्करग्रहे प्रीत्यादत्तोत्सवेवस्त्रंधार्यंनिंद्येपिभादिकेइति अथोत्तरार्धेनपण्यानांक्रयविक्रयावाह मैत्रेति मैत्रमनु राधा शेषंस्कगमं घटपरध्र्यंगे घटःकुंभः तस्मात्परमन्यतमंतच्चतत्कुड्यांगंच कुध्र्यंगंउपचयलग्नंतस्मिन्कुंभव्यतिरिक्तोपच यलग्नेपण्यानांपूगीफलखर्जुरादीनांक्रयविक्रयौतनुविस्तारयकुर्वित्यर्थः कस्यांसत्यांस्वशुध्दौसत्यां स्वंधनभावः तस्यशुद्धिःपाप राहित्यंतस्यासत्यांशेषंप्राग्वत् तथाचोक्तं दशमैकादशेलग्नेवित्तकेंद्रत्रिकोणगेःशुभैः पण्यस्यकर्मोक्तंवर्जयित्वाघटोदयमिति॥३॥

अथदृत्तार्धेनधनिष्ठापंचकेवर्ज्यमाह कुंभद्वयस्थेविधौसतिकुंभमीनगेसतिपरिहरेत् सर्वथानाचरेत् स्पष्टं अथोत्तरार्धेनचरणेनसे
वामाह सेवेति ध्रुवादिभिर्नक्षत्रैःसेवाइष्टास्यात् स्फगमं कस्मिन्सति स्वायेरवौसतिवाइत्यथवाकुजेसति खंदशमं आयएकादशं अ
नयोरन्यतमेरविभौमयोरन्यतमेसतीत्यर्थः यस्मिल्लग्नेसेवाक्रियतेतस्माल्लग्नाद्दशमेएकादशेवारवौभौमेवासतिसेवाइष्टाहितकरास्या

प्रेतज्वालनशय्यकावितननेस्तंभोछ्रयंयाम्यदिग्यानंकाष्टतृणोच्चयं परिहरेत्कुंभद्वयस्थेविधौ ॥ सेवेष्टा
ध्रुववारुणांत्यदस्रभैःस्वायेरवौवाकुजेसन्यासःस्थिरभेखलेर्गतबलैःषष्ठांत्यगेभार्गवे ॥ ४ ॥७॥

दित्यर्थः शेषंप्राग्वत् अथचतुर्थचरणेनसन्यासमाह सन्यासइति स्थिरनक्षत्रेस्थिरलग्नेचसन्यासःइष्टस्यात् कैःखलैर्गतबलैः
पापग्रहैर्हीनबलैरित्यर्थः सप्तम्यर्थेतृतीया कस्मिन्सति भार्गवेशुक्रेषष्ठ्यंत्यगे ६।१२।सति शेषंलग्नबलंप्राग्वत् उक्तंच त्रिषडेकाद
शेसोरिर्व्ययेषष्ठेचभार्गवः सबलेधर्मपेजीवेकेंद्रदीक्षाविरक्तिकृदिति ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथवृत्तद्वयेनकृषिकर्माह उद्वाहर्क्षाणिपूर्वोक्तानिमूलांत्यार्केत्यादीनि एकादशसंख्याकानि चराणिप्रसिद्धानि द्विपंविशाखा इंद्रोज्ये
ष्ठा लघुभानिप्रत्वाष्ट्रं चित्रातैःव्यार्किज्ञारखगान्हि आर्किःशनिः ज्ञोबुधः आरोभौमः विगताआर्किज्ञारायेभ्यस्तेतथा तेश्चतेखगाश्चवते
षांअहःदिनंतस्मिन् शनिबुधभौमरहितवारेइत्यर्थः युग्मझषगोकन्याविलग्ने युग्मंमिथुनं झषोमीनः गोर्वृषः कन्याप्रसिद्धा एषाम
न्यतमविलग्नेतिथौ व्यंकोजेविगतःअंकः नवमीयस्मात् असौव्यंकः सचासौओजश्च ओजोविषमस्तस्मिन् नवमीव्यतिरिक्तविष
मतिथावित्यर्थः किंलक्षणे व्यंकोजेतिथौ सदिशिदिक्दशमी तयासहवर्तमाने १।३।५।७।११।१५।१३।१० कृषिःशुभास्यात् तथाचो

उद्वाहर्क्षचरद्विपेंद्रलघुभत्वाष्ट्रैःशुभास्यात्कृषिर्व्यार्किज्ञारखगान्हियुग्मझषगोकन्याविलग्नेतिथौ॥

क्तम् चंद्रेशुभेशुभंतिथौशुभवारयोगेवारेगुरौशशि जशुक्रगभस्तिवारे लग्नेवृषेमिथुनकेझषकन्यकायां शस्तंकृषिप्रकरणं प्रव
पेन्निधानेइति अन्यच्च दशम्येकादशीचैवतृतीयाचत्रयोदशी सप्तमीपंचमीचैवप्रतिपच्चसुखावहा हंत्यष्टमीबलीवर्धान् नवमीस
स्यघातिनी चतुर्थीकीटजननीपतिंहंतीचतुर्दशी रवौबृहस्पतौचंद्रेशुक्रेकुर्याद्विशेषतः बुधार्किभूमिपुत्राश्चनभवंतीफलप्रदाइति
अथविधिमाह सिताछादनेश्वेतवस्त्रधरःपटुःकुशलः कर्ताखगभूपमुख्यान् देवान्प्रणम्य कृष्यारंभःपूर्वोक्तःसितयज्ञःक्रियते

तत्रपूजितान्खगभूमुख्यान्ग्रहभूम्यग्न्यादीन् प्रदक्षिणापूर्वकं प्रणम्य मनोवाक्कायकर्मभिर्नमस्कृत्वा स्वर्णोद्घृष्टहलंस्कृवर्णघर्षिताग्रंह
लंसमुखकस्कृषपैर्मुखाद्रूपणास्तैःसहवर्तमानाःसमुखाः शोभनाःवृषाःस्कृवृषाःगुणावयवपूर्णाःनिरोगाः समुखाश्चतेस्कृवृषाश्च तथातैः
कृत्वा सौमीउत्तरांदिशंप्रतित्रिवारंनयेत् हलेनपद्धतीःकुर्यादितिभावः उत्तरदिशांप्रतित्रिवारंनयनेनपंचरेखाउत्पद्यंते तद्यथा प्रथम-
गमनेनैका आवर्तनेद्वितीया पुनरुत्तरांप्रतिद्वितीयगमनेनतृतीया पुनरावर्तनेचतुर्थी पुनरुत्तरांप्रतितृतीयगमनेनपंचमीरेखाउत्पद्यते

व्यंकोजेसदिशिप्रणम्यखगभूमुख्यान्सिताछादनःस्वर्णोद्घृष्टहलंसमुखस्कृवृषैःसौमींपद्धतिस्त्रिर्नयेत ५,

अधिकानकार्याइतिभावः सौमींपद्धतिस्त्रिर्नयेदित्यत्रपद्धतिपदग्रहणं अखंडऋजुरेखाकरणार्थं तथाचोक्तं शस्ताःस्कृचंद्रताराःस्कृशुचिःस्कृ-
क्लेनवाससा स्नात्वागंधैश्चपुष्पैश्चपूजयित्वाविशेषतः पृथ्वीग्रहसंयुक्तांपूजयित्वाप्रजापतिं अग्निंप्रदक्षिणीकृत्यदातव्याचैवदक्षिणा कृष्णो
वृषोनियोक्तव्योजीवनश्चयुतेनवा विबलंछिन्नलांगूलंकपिलंवृषभंत्यजेत् हलप्रवाहनंकार्यंनिरुभिर्वृषकर्षकैः हलादिभिर्दृढैःक्षेमंकुद्दा
दैरस्कृभंभवेत् वृषभायदियुध्येयुस्तस्यविघ्नंसदाभवेत् हेमघृष्टहलाग्रेणछिन्नरेखांनकारयेत् उत्तराभिमुखोभूत्वाक्षीरेणार्घ्यंप्रदापये
त् तस्यसर्वप्रकारेणनिर्विघ्नंकारयेत्तदा एकाजयकरीरेखातृतीयाचार्थदृष्टिदा पंचमीचभवेद्रेखाबहुसस्यफलप्रदा अतऊर्ध्वं-

नकर्तव्यामहादोषस्ततोभवेत् स्मृतव्र्योवसवः शुक्रः पृथुनामासचंद्रमाः पराशरोहलीचैवसर्वविघ्नोपशांतयेइति अत्रदुर्निमित्तानितत्रैवो
क्तानि हलेप्रवाह्यमाणेतुकूर्मउत्पद्यतेयदि गृहिणोमृतयेतस्यततोग्नेश्चभयंभवेत् ईषाभंगोयदाकृष्टुः संशयोजीवितस्यच स्तननाशो
युगेभग्नेसमानेम्रियतेशिशुः योक्त्रछेदेतुव्यासंगः सस्यहानिश्चजायते हलेप्रवाह्यमाणेतुगौरेकः प्रपतेद्यदि प्रपतेद्युक्तमात्रस्तुबंधनं
चप्रयच्छति ज्वरातिसाररोगेणकृषिभंगंविनिर्दिशेत् प्रवहेद्युक्तमात्रस्तुततोगौः खनतेयदि वहेनद्युक्तमात्रस्तुतदासस्यंचतुर्गुणमिति

त्रित्रित्रीषनलार्थरामहुतभुक्भेषर्कभुक्तादसत्सद्वयः कृषिभैर्विवारुणहरींद्रेबीजवापःशुभः ॥

॥५॥ अथकृषिविषयेलांगलचक्रमाह अर्कभुक्तात्सूर्यनक्षत्रात्सकाशात् त्रित्र्यादिषुस्थानाष्टस्थितेषुनक्षत्रेषु असत्सदित्येतत्फलद्वयंभू
यः वारंवारंस्यात् एतदुक्तंभवति सूर्याक्रांतनक्षत्रस्यआदिमान्नक्षत्रात्सकाशात् त्रिषुअसत् दुष्टफलंस्यात् तदनंतरं त्रिषुसत् शुभंस्यात्
ततस्त्रिषुअसत् ततः इषुषुपंचसुसत् ततोनलेषुत्रिषुअसत् ततः अर्थेषुपंचसुसत् ततोरामेषुत्रिषुअसत् ततोहुतभुक्षुत्रिषुसत्स्यादित्य
र्थः अथबीजोप्तिमाह कृषिभैरिति कृषिभैः कृषिनक्षत्रैः उद्वाहर्क्षचरादृपेत्यादिभिर्बीजवापः शुभः प्रोक्तः किंलक्षणैः कृषिभैः विवारुण

वारुणंशततारका हरिःश्रवणः इंद्रोज्येष्ठाविगताःवारुणहरींद्रा येभ्यस्तानितथातैः शततारकाश्रवणज्येष्ठारहितैरित्यर्थः कृषिभैरित्यप-
लक्षणं तस्मात्कृष्युक्तंसर्वतिथिवारादिकंज्ञेयम् तथाचोक्तं मूषकानांभयंभौमेमंदेशलभकीटयोः नवपेच्चतिथौरिक्तेहीनेसोमेविशेषतः वृष
लग्नेथवामीनेकन्यायांमिथुनेथवा वापयेत्सर्वसस्यानियदीछेत्सस्यसंपदइत्यादि लग्नबलंप्राग्वत् अथबीजवापविषयेद्विभेदंफणिचक्र-
माह सूर्यर्क्षादिति सूर्ययुक्तनक्षत्रादितृतीयं तस्मादतिधृतिरेकोनविंशंतस्मात् अष्टाष्टभिः एकोनविंशादष्टभिर्नक्षत्रैर्बीजवापःसत्फ

॥ सूर्यर्क्षादित्तृतीयतोऽतिधृतितश्चाष्टाष्टभैःसत्फलःप्रोक्तोन्यैःफणिसप्तमाद्रविमितैस्तच्छेदनंवापभैः६

लः अथद्वितीयभेदमाह अन्यैरिति अन्यैराचार्यैःफणिसप्तमात् राहुसप्तमात्सकाशात् रविमितैर्द्वादशभिर्नक्षत्रैर्बीजवापःफभःशो
क्तः एतदुक्तंभवति राहुर्यस्मिन्नक्षत्रेभवति तस्माद्यत्सप्तमंनक्षत्रंतत्फणिसप्तममुच्यते तस्मात्सकाशात् द्वादशभिरित्यर्थः राहोस्तु
फणीतिनामग्रंथांतरेप्रसिद्धं वराहमिहिराचार्येणराहुस्वरूपविकल्पाः ग्रंथांतरोक्ताउद्घाटिताः स्वकृतसंहितायां अमृतास्वादविशेषाच्छि-
न्नमपिप्रभिरःकिलासुरस्येदं प्राणैरपिपरित्यक्तंग्रहतांयातंवदंत्येके इंद्वर्कमंडलाकृतिरसितत्वात्किलनदृश्यतेगगने अन्यत्रपर्वकाला

हूरप्रदानात्कमलयोनेः मुखपुच्छविभक्तांगंभुजंगमाकारमुपदिशंत्यन्येइति भुजंगमाकारकथनात्फणीत्यभिधानंप्रसिद्धंरत्नमालायाम
पि फणिभाद्वीजोप्तिकालेस्फुटमिति तथाचागमांतरे राहुभादष्टमंयावद्वीजोप्तिःपरिवर्जयेदिति अथधान्यछेदनमाह तच्छेदनंवा
पभैरिति तेषांधान्यानांछेदनंतच्छेदनं वापभैर्बीजवापननक्षत्रैःप्रोक्तं ननुयस्यांगंयद्दोंगिनोगदितंभेकुर्यादिति पुरैवोक्तं तत्कथं
पुनरुक्तं तच्छेदनंवापभैरिति सत्यं कृषिनक्षत्राणांबीजवापननक्षत्राणांच किंचिद्भेदोस्ति द्वयोःकृष्यंगत्वात् कैःकार्यमिति संदेहनि
वारणार्थंतच्छेदनंवापभैरित्युक्तं ॥ ६ ॥ अथनिष्पन्नेधान्येक्रमप्राप्तंमेथिरोपणंवृत्तचरणेनाह क्षीरतरोर्वटवृक्षादेर्मेथींउद्वाहभै-
र्विवाहनक्षत्रैर्मूलांत्यार्केत्यादिभिरारोपयेत्तन्निखनेत् मेथिर्नामखलेधान्यमर्दनार्थंवृषपंक्तियोजनार्थंकाष्ठमारोप्यते मेथ्यंतेसंगम्यंतेवृषभा
अस्मिन्निति मेथिः पुंसिमेथिःखलेदारुन्यस्तंयत्पशुबंधनइत्यमरः किंलक्षणैरुद्वाहभैः उफानुरहितैः उफाउत्तराफाल्गुनी अनुः अनु
राधाताभ्यांरहितैः उक्तंच रेवतीरोहिणीमूलंस्वातीहस्तोमृगस्तथा आषाढोत्तरहस्तश्चतथाभाद्रपदामता बंधनेसर्वबीजानांतथाशाला
प्रवेशने दुःखदावनदाचैषानुराधोत्तरफाल्गुनी वटश्चसप्तपर्णश्चभंगारीशाल्मलीतथा औदुंबरीतथाधात्रीयाचान्याक्षीरवाहिनी स्त्री
नाम्नीकर्षकैर्नित्यंमेथीकार्याफलप्रदेति अथनवधान्यप्रसंगेननवान्नकर्मद्वितीयचरणेनाह अन्नप्राशनभैरिति वसंतशरदोःऋत्वोः
अन्नप्राशनभैर्नवान्नंनवान्नकर्मबुधैःप्रोक्तं अन्नप्राशनभैरित्युपलक्षणं तस्मादन्नप्राशनोक्तंतिथिवारादिकमत्रग्राह्यम् साग्निक

स्यन वान्नकर्मणाविनाव्रीत्यादीनांनवनवमितानांधान्यानांभक्षणेदोषप्रसंगादावश्यकंकर्मैतत् नवधान्यानीमानिव्रीहयोयवगोधूमानीवाराः
कंगुवैणकाः शालयोमुद्गमाषाश्चनव धान्यानिचक्रमात् एषांमध्येशरत्संभवानिधान्यानिव्रीत्याग्रयणेनविनानभक्षणीयानिवसंतसंभवानि
यवाग्रयणेनविनानभक्षिणीयानीतिनियमादिकर्मशरद्वसंतयोःक्रियतइति ततअन्नप्राशनोदितैस्तिथिभादिभिः मासेषष्ठेष्टमेवोत्तत्रोक्तैः

मेथींक्षीरतरोरुफान्नुरहितेरुद्राहभैरोपयेदन्नप्राशनवद्वसंतुशारदोः प्रोक्तंनवान्नंबुधैः॥ मैत्रार्का
त्यवसूत्तरेजवरुणेःसेंद्रेःऋभंनर्तनंलग्नेज्ञेगुरुवीक्षितेहिबुकगेःसौम्येश्वसंगीतकम्॥ ७॥ ७॥

न्नवान्नंकर्तव्यमित्यर्थः अथोत्तरार्धेननृत्यसंगीतयोरारंभमाह मैत्रार्केति मैत्रमनुराधा अर्कोहस्तः अंत्यंरेवती वसवोधनिष्ठाउत्तरा-
स्तिस्त्रः ईज्यःपुष्यः वरुणःशततारकाइंद्रोज्येष्ठा तैर्नर्तनमारभेत् संगीतकंच आरभेत् कस्मिन्सति लग्नेवर्तमानेज्ञेगुरुवीक्षितेसतिकैः
हिबुकैः सौम्यैः चतुर्थस्थानस्थितैःसौम्यग्रहैःशेषंप्राग्वत्॥ ७॥ ७॥ ७॥ ७॥ ७॥ ७॥

अथनानापण्यानांकर्मवृत्तेनैकेनाह द्वीशोंविशाखा अर्कोहस्तः इंदुर्मृगःअदितिःपुनर्वसुः ईज्यःपुष्यः वसवोधनिष्ठा शिवःआर्द्रा अश्विनी
प्रसिद्धा अंत्यंरेवती अग्निःकृत्तिका पाशीशततारका इंद्रोज्येष्ठा तैःपूर्वाभिस्तिसृभिःविसिंहभतनौ विगतःसिंहोयेभ्यस्तानिविसिंहा-
नि तानिचतानिविसिंहभानि सिंहरहितंराशयः तेषांतनुःलग्नंतस्मिन्नानापण्यानांक्रियाशुभदाउदिता पण्यानांक्रयविक्रयादिकर्म
शुभदंप्रोक्तमित्यर्थः अथोत्तरार्धेनवर्ज्यमाह अर्कचतुर्षुवारेषु रविचंद्रभौमबुधवारेषु कोत्तरहरित्वाष्ट्रेषु कःरोहिणी उत्तरास्तिस्रः

द्वीशार्केंद्वदितीज्यवासवशिवाश्व्यंत्याग्निपाशींद्रभैःपूर्वाभिःशुभदाविसिंहभतनौनानापण्यानांक्रिया
वारेष्वर्कचतुर्षुकोत्तरहरित्वाष्ट्रेष्वमारिक्तयोरष्टम्यांनहितोदितास्वभगभेनस्याद्धदोषःकिल ॥ ८ ॥

आसांसमाहारःकोत्तरं हरिःश्रवणः त्वाष्ट्रंचित्रा एषुअमारिक्तयोःअमाअमावास्या रिक्ताश्चतुर्थीनवमीचतुर्दशीनामन्यतमा तयो
र्अष्टमीप्रसिद्धा तस्यांनानापण्यानांक्रियाहितानउदिता अपवादमाह स्वभगभेसतिभदोषोनक्षत्रदोषः क्वचित्पण्यकर्मणिनस्यात्
लग्नबलंप्राग्वत् उक्तंच व्यादित्यद्विवसूब्धांत्यार्केंद्रद्वीशेशैःक्रयादिगोः दार्द्राभूलाष्टमीचित्रा ध्रुवकर्णैर्गमाद्यसत् सोमार्कवैधृतेपातेलं

म्नेपंचाननेबुधे भद्रासंक्रांतिरिक्तासुपत्रुककर्मविवर्जयेत् शुभग्रहोदयेशुद्धेनैधनेस्वर्क्षयोनिषु रक्षाद्वादिक्रियाशस्तापश्चूर्नामुनिभिः स्मृतेति तथाचागमांतरे सोमेभौमेबुधेगावोनचाल्यास्तुरगाः शनाविति अन्यच्च पूर्वात्रयामृतमयूखहुताशनेषुशक्राग्निवाजिवसुवारुणशाकरेषु एतेषुगोमहिषदंतितुरंगमादिनानाप्रकारपशुजातिगतिःप्रशस्तेति ॥ ८ ॥ अथाश्वकर्माईत्तेकेनाह त्र्यादित्यं पुनर्वसुपुष्यो

त्र्यादित्यहिवसुस्थिराश्विभमृदुस्वात्यर्कभैर्जत्रयाकारा न्हीज्यभृगूदयेद्विकमदेषिंदौक्रियाश्वीहिता

हिवसुधनिष्ठाशततारके स्थिराणिप्रसिद्धानि अश्विनीप्रसिद्धानि मृदूनिप्रसिद्धानि स्वातीप्रसिद्धा अर्कोहस्तः तैःज्ञत्रयाकाराह्नि ज्ञत्रयंबुधगुरुशुक्राः अर्कःसूर्यः आरोभौमः एषामह्नःदिनं तस्मिन्नीज्यभृगूदयेउदयेलग्नेईज्यभृगोइतिईज्यभृगूदयम् तस्मिन्गुरुशुक्रयुतेलग्नेइत्यर्थः द्विकमदेषुइंदौ द्विद्वितीयंकंचतुर्थं मदःसप्तमंएषुचंद्रेसतीत्यर्थः अश्वीक्रियाक्रयविक्रयादि कीहिताशुभकर्त्रीस्यात् अथा

श्वचक्रमाह तत्रापीति तत्रापिद्व्यादित्यादिषुनक्षत्रेषुसत्स्वपिअर्कभतः सूर्यनक्षत्रात्सकाशात्क्रमात्तिथिमितैर्नक्षत्रैः पश्चादुत्क्रमतस्त्रि
भिर्नक्षत्रैःसाभिजिद्यथातथा अश्विनीक्रियाशस्ताशोभनास्यात् एवंसामान्यतोश्वकर्मोक्तेदानींविशेषमाह येति याअश्विक्रियानृसमामनु
ष्यसदृशासाक्रियातदुक्तभमुखैः कार्या तस्मैमनुष्यायउक्तानिभमुखानिनक्षत्रादीनितैःकार्येत्यर्थः परायान्नृसमानभवतिसाएभिःसामान्यै
र्द्व्यादित्यादिभिर्बुधैःकार्येत्यर्थः लग्नंप्राग्वत् तथाचनारदः विविष्णुचरभेक्षिप्रेमृदुभेस्थिरभेषुच वाजिकर्माखिलंसूर्यवारेकार्यंविशेषतइ

तत्राप्यर्कभतःक्रमात्तिथिमितैःपश्चात्त्रिभिःसाभिजिच्छस्तायान्नृसमातदुक्तभमुखैःकार्यापरैर्भिर्बुधैः ९

त्यादि तथाचोक्तं घृतान्नचणकक्षीर तृणमुद्गादिभक्षणेअन्नप्राशनवद्दक्षंस्नानंसौम्यग्रहोदये चौलोक्तंक्षुरकर्मादौभेषजेभेषजोदितं
गर्भाधानोक्तमश्वानांमैथुनेतुविलोकयेत् गृहारंभोदितेकालेहयशालाविधीयते शिक्षाविद्योक्तकालेचभूषणंभूषणोदिते चर्मकर्मा-
दिकंकार्यंजययोगेरुभोदये एवंखरोष्ट्रादिककार्यंपूर्वोक्तेवाहनादिकमिति ॥ ९ ॥ ❀ ॥ ❀ ॥ ❀ ॥

अथाभ्यंगनिषिद्धकालमाह भद्राप्रसिद्धासंक्रमः संक्रांतिः पातो व्यतीपातः वैधृतिः प्रसिद्धा सितः शुक्रवारः ईज्यो गुरुवारः अर्कौ रविवारः आ
रो भौमवारः षष्ठ्यादयः सर्वास्तिथयः तासु १।२।३।४।५।६।७।८।९।१०।११।१२।१३।१४।१५। ३० श्राद्धाहः श्राद्धदिनं प्रतिपद्द्वयं प्रतिपाद्द्वितीये त
स्मिन् हेतुं कारणं विना अभ्यंजनं अभ्यंगः परिहरेत् कारणे सति अवश्यं चरेदित्यर्थसिद्धम् तथाचोक्तं सप्तम्यां न स्पृशेत्तैलं नवम्यां प्रतिपत्तिथौ
चतुर्दश्याम थाष्टम्यां षष्ठ्यां चैव विशेषतः इति ग्रंथांतरे चतुर्दश्यष्टमी चैव पौर्णिमास्यर्कसंक्रमः तैलस्नानं न कुर्वीत स्फ़तबंधुधनक्षयाविति त

भद्रासंक्रमपातवैधृतिसितेज्यार्कारषष्ठ्यादिषु श्राद्धाहे प्रतिद्वये परिहरेद्धेतुं विनाभ्यंजनम् ॥

थाच वृद्धमनुः दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः नवम्यां च न चेत्तत्र निमित्तांतरसंभवः प्रतिपद्यनपत्यः स्याद्द्वितीयायामपलिकः दशा-
म्यामधनः स्नाने सर्वं हंति त्रयोदशीति रत्नमालायां रविस्तापं कांतिं वितरति शशी भूमितनयो मृतिं लक्ष्मीं चांद्रिः सुरपतिगुरुर्वित्तहरणं विपत्तिं
दैन्यानां गुरुरखिलभोगानुभवनं नृणां तैलाभ्यंगात्सपदि कुरुते सूर्यतनय इति अथाभ्यंगहेतूनाह मांगल्यमिति मांगल्यं विवाहादि विजयो
त्सवः आश्विनशुक्लदशम्यां क्रियते अब्दवदनं संवत्सरप्रतिपत् दीपावलिः प्रसिद्धा एते भ्यंगस्य हेतवः कारणानि एषु निषिद्धतिथ्यादावपि

अभ्यंगःकर्तव्यः तथाचोक्तंव्यवहारसारे वत्सरादौवसंतादौसूतकांतेमहोत्सवे दीपोत्सवेचतुर्दश्यामभ्यंगनियमोनचेति तथाचोक्तंस्कां
देविजयादशमीविषयं निषिद्धमपिकर्तव्यंतैलाभ्यंजनमादरादिति अथाभ्यंगनिषिद्धापवादमाह कथि तादिति निंद्येन्हिकथितादितै
लंभनसच्छुभंस्यात् आदिग्रहणात्सार्षपस्कगंधपुष्पवासितादितैलंगृह्यते एवंकथितादितैलंनिंद्यदिनेपिशुभमित्यर्थः उक्तंच सा

मांगल्यंविजयोत्सवोब्दवदनंदीपावलिर्हंतवोभ्यंगस्यक्कथितादितैलमनसन्निंद्येन्हिनित्येखिलं ॥ १० ॥

र्षपंगंधतैलंचयत्तैलंपुष्पवासितं द्रव्यांतरयुतंवापिनदुष्यतिकदाचन सूर्यशुक्रारवारेषुनिषिद्धास्तातिथिष्वपि कर्तव्येपदिवास्नानेपक्व
तैलंनदुष्यति रवौपुष्पंगुरौदूर्वाभौमवारेचमृत्तिका भार्गवेगोमयंक्षिप्त्वातैलस्नानंसुखावहमिति. अथनित्याभ्यंगेविशेषमाह नित्येति
खिलमितिनित्येभ्यंगेअखिलंतैलंपक्वादिकं अनसत्शुभंस्यात् उक्तंच नित्यस्नानेचकर्तव्येतिथिदोषोनविद्यतइति ॥ १० ॥ ७ ॥

अथप्रसंगेनतिलामलकस्नानेनिषिद्धतिथीनाह दिक्कृदशमी विश्वेत्रयोदशी अद्रिःसप्तमी दक्कृद्वितीया अंकोनवमी दर्शोअमावास्याएते
षुतिथिषुश्रीकामःधात्रीफलैः आमलकीफलैःस्नानंन अभ्याचरेत् तथाचोक्तं यःकरोतिदशम्यांचस्नानमामलकैःसहः पुत्रहानिर्भवेत्तस्य
त्रयोदश्यांधनक्षयः अर्थपुत्रक्षयस्तस्यद्वितीयायांनसंशयः अमायांचनवम्यांचसप्तम्यांचकुलक्षयइति अथस्त्रीणांबुधादिषु अभ्यं
गनिषेधमाह बुधोबुधवारः अंबुपर्क्षंशततारकापितृभंमघा तेषुअभ्यंगस्तस्मात् अंगनास्त्रीपतिघ्नीस्यात् उक्तंच स्नानंकुर्वंति

॥ दिग्वि १० श्वा १३ अद्रि ७ दृ २ गंक ९ दर्शतिथिषुस्नानंनधात्रीफलैःश्रीकामोथबुधांबुपर्क्षपितृभाभ्यंगापतिघ्नंगना॥

यानार्यश्चंद्रेशतभिषग्गते सप्तजन्मभवेयुस्ताविधवादुर्भगाध्रुवमिति त्रिविक्रमशते स्नानंनाकरिक्रतेज्यविष्टिसंक्रांतिपर्वसु व्यष्टष
ष्ठदिक्त्रयोदश्यांस्त्रियस्तुनमघाबुधैः अथपुत्रवतःसोमवारेभ्यंगनिषेधमाह पुत्रीति पुत्रवान्सोमवारदिनेनस्नायात् उक्तंच पुत्र
वान्स्वगृहेनित्यंनस्नायाद्युत्तरामुखः सोमवारेतथाभ्यंगंवर्जयेत्सर्वथाबुधैरिति अथप्रसंगेनसूतिकास्नानेनिषेधकालमाहप्रसूरिति
यमोभरणीपितरोमघा त्वाष्ट्रंचित्रा इंद्रोज्येष्ठा मिश्रेकृत्तिकाविशाखे अंबुपःशततारा क्रव्यादोमूलं ईश्वरभमार्द्रा एषांसमाहारस्त

स्मिन् कुपुत्रहरिजे कुत्सितः पुत्रः पुत्रभावोयस्य तत्कुपुत्रं तच्चतद्धरिजंचतस्मिन् यस्माल्लग्नपंचमस्थः पापग्रहोभवतितस्मिन्नि
त्यर्थः निशास्यरात्रिमुखंसायंकालस्तस्मिन्प्रसूतानस्नायात् शेषंलग्नबलंप्राग्वत् उक्तंच मघामूलविशाखार्द्राचित्रादिद्वियमद्वये
ज्येष्ठासायंजले शाक्षैर्नैवस्नायात्प्रसूतिका क्रूरग्रहयुतेलग्नेपंचमेपापवर्जिते परित्यज्यमहादोषान्प्रसूतिकास्नानमाचरेत् ११

पुत्रीसोमदिनेप्रसूर्यमपितृत्वाष्ट्रेंद्रमिश्रांबुपक्रव्यादेश्वरभेकुपुत्रहरिजेस्नायान्निशास्येपिच ११
मंदारान्यदिनेमृदुध्रुवचरक्षिप्रेबलक्षेस्रुधायोगेभेषजमाचरेत्स्मृतिकेंद्रारिव्ययांगेभिषक् ॥

अथौषधनिष्पादनमाह मंदःशनिः आरोभौमः ताभ्यामन्ये रविचंद्रबुधगुरुशुक्राः तेषांदिनंतस्मिन् मृदुध्रुवचरक्षिप्रैर्नक्षत्रैः व
लक्षेशुक्लपक्षेस्रुधायोगे अमृतयोगेग्रंथांतरप्रसिद्धेस्मृतिकेंद्रारिव्ययांगे शोभमानिपापग्रहरहितानिमृत्तिकेंद्रव्ययानि यस्यत
त् स्मृत्तिकेंद्रारिव्ययम् तच्चतत् अंगंच तस्मिन्भिषक्वैद्यःभेषजमाचरेत्कुर्यात् शेषंलग्नबलंप्राग्वत् ॥ ७ ॥ ७ ॥

अथौषधदानमाह तदिति तदौषधंइहानंतकेभार्दौदद्यात् कथंभूतोइह निभ्रुवेंदुतनयप्रद्योतने श्रवनक्षत्रबुधरविरहिते अथरक्तास्रावव्र-
णयोर्विशेषमाह असृक्स्रावोरक्तस्रावः व्रणःक्षतं अनयोःकर्मसूर्यकुजयोरन्हि दिवसेआचरेत् कयोःसतोः इहानयोःसूर्यकुजयोःकेंद्र-
स्थयोःसतोः तथाचोक्तं मंदारवर्जितेवारेचरक्षिप्रमृदुध्रुवैः सूर्यसौम्यैःकेंद्रगतैःभेषजोत्पादनंहितं रक्तस्रावंकुजेकुर्याच्छ्रोरायामथापिवा
कुजेकेंद्रेथवामंदेरवौवाविखलेष्टमे व्रणक्रियाकुजेसूर्येकेंद्रगेतद्दिनेष्टमे शुद्धेषष्ठेचसत्क्रूरेचरलग्नेयुवस्सरेइति ॥१२॥ अथप्रसंगेनरोगादि

तद्द्यादिहनिभ्रुवेंदुतनयप्रद्योतनेरोगिणेसृक्स्रावव्रणकर्मसूर्यकुजयोरन्हीहकेंद्रस्थयोः ॥१२॥

सानाह वृत्तार्धेन याम्यंभरणीअहित्रयं आश्लेषात्रयं वायुःस्वाती मूलंप्र० जलपःशततारका उपांत्यंउ०भा० इंद्रोज्येष्ठाहस्तःप्र० अंबुभंपूषा
अस्मिन्नक्षत्रगणेरुग्णःरोगीशांत्यायथोक्तशांतिकेनविरुक्ज्वरमुक्तोभवति अजद्वीपयोःश्रवणविशाखयोः रुग्णःनृपैः षोडशाभिर्दिनैःविरु
क्स्यात् अन्यत्रअन्येषुनक्षत्रेषुरुग्णोनवदिनैर्विरुक्भवति एतज्ज्योतिषार्काभिप्रायं किंचिद्रत्नकोशाभिप्रायमुक्तं तत्रयेषुनक्षत्रेषुज्वरि
तस्यमृत्युरुक्तः येषुचकृच्छ्रेणबहुभिर्दिनैः ज्वरेणमुक्तिरुक्तातत्फलंममशांत्याविरुगित्युक्तं क्वचिदन्यथाफलदर्शनात् तथायेषुयेषुनक्षत्रे

पुसप्तभिर्नवभिरेकादशभिर्दिनैर्ज्वरनिर्मोचनमुक्तं तत्फलमत्र मध्यमत्वेन नवदिनैर्विरुगित्युक्तं ग्रंथलाघवाय स्वल्पांतरत्वात् तथाच ज्यो तिषार्के सप्ताहमृतिनंदाद्रिरुद्रमृत्युनगाद्रिभिः कुछ्रमृत्युमृतीश्रौश्वकुछ्रराव्यस्त तानृपैरित्यादि अथोत्तरार्धेन रोगमुक्तिस्नानमाह आ दित्येति आदित्यं पुनर्वसू अहिराश्लेषा अनिलः स्वाती ध्रुवाणि पूर्वोक्तानि अंत्यं रेवती पितृभं मघा अस्मिन्नक्षत्रगणे शुक्रेंदुवारे शुक्रसोमवारे गदत्यक्तस्नानं रोगमुक्तस्नानं अनिष्टं स्यात् तर्हि कुत्र कर्तव्यमित्यत आह अत्र शुभे भादौ इष्टं शुभं स्यात् कस्मिन्सति खलास्त

याम्याहित्रयवायुमूलजलपोपांत्येंद्रहस्तांबुभेशांत्याजाहिपयोर्नृपैर्नवदिनैरन्यत्र रुग्णो विरुक् ॥ आदि-
त्यात्यनिलध्रुवांत्यपितृभे शुक्रेंदुवारे गदत्यक्तस्नानमनिष्टमिष्टमत्र शुभे भादौ खलास्तस्थिरे ॥ १३ ॥

स्थिरे सति खलः पापग्रहः अस्ते यस्य तत्तथा तच्च ततू स्थिरं च तस्मिन् स्थिरलग्ने पापे सप्तमे सतीत्यर्थः तथाचोक्तं वैधृतौ व्यतिपाते च भद्रा यां धिष्ण्यसंक्रमे रोगमुक्तो नरः स्नायात्कुवारर्क्षतिथिष्वपि द्यूनं पापयुतं शस्तं दशमं च शुभान्वितं सौम्यक्रूरयुतं रंध्रं रोगस्नाने रिभं तथे ति चंद्रबलं सर्वत्र योज्यं कुतिथिभादौ सदित्यतेन चंद्रादिबलविषये मोहो माभूदित्यतः चंद्रबलं सूचितं यतः ग्रंथादौ गर्भाधाने सदिद्धं युक्तं तत्सर्वकर्मसु ज्ञेयं तथाचोक्तं स्पष्टं स्नायाद्रोगविमुक्तस्तु शुभयोश्चंद्रतारयोरिति ॥ १३ ॥ ७ ॥ ७ ॥ ७ ॥

अथव्यवहारद्रव्यंवृत्तेनैकेनाह द्रव्यंस्वर्णादिसंव्यवहारतः कुसीदव्यवहारेणलघुचरैर्नक्षत्रैर्योज्यं देयमित्यर्थःक्वचरांगेचरलग्नेकस्मिन्स
तिबुधेधर्माष्टात्मजगेसति धर्मोनवमं अष्टमंआत्मजःपंचमंएषुअन्यतमस्थानगतेसतीत्यर्थः अन्यत्सूर्वोक्तंज्ञेयं अथानंतरंतस्यप्रयुक्तस्यद्रव्य
स्यहरणंपुनर्ग्रहणं तस्मिन्विषयेहस्तोनक्षत्रंरविःरविवारः ज्ञोबुधवारः कुजोभौमवारः संक्रांतिःसूर्यसंक्रमणादिनं भरणीप्रसिद्धात्रिपुष्क
रोयोगः यमोयमलयोगः त्रिपुष्करयोगयमलयोगौग्रंथांतरेप्रसिद्धौ रत्नमालायां विषमचरणंधिष्ण्यंभद्रातिथिर्यदि संस्पृष्टोसकृद्गुरुर्दा

द्रव्यंसंव्यवहारतोलघुचरैर्योज्यंचरांगेबुधेधर्माष्टात्मजगेथतस्यहरणेन्नार्कोरविज्ञःकुजः॥ संक्रांतिर्भ-
रणीत्रिपुष्करयमौकुंभांत्ययोश्चंद्रमाद्दक्षिश्चेनिशुभाविदूनइहयत्कुर्याद्दणंतत्स्थिरम्॥ १४ ॥ ७ ॥

निस्माःपुत्राणांकथंचनवासरेमुनिभिरुदितःसोयंयोगस्त्रिपुष्करसंज्ञकइत्यादि कुंभांत्ययोश्चंद्रमाःधनिष्ठापंचकं दृष्टिर्दक्षियोगोपिशुभः
हस्तादयोत्रस्वकीयद्रव्यग्रहणेशुभाः विदूनेइहहस्तादौयद्दणंकुर्यात्तत्स्थिरंस्यात् तथाचोक्तं वारैःक्षिप्रैश्चरैर्लग्नेबुधेधर्मसुताष्टमे व्यवहा
रंविनाद्रव्यप्रयोगोमुनिभिःस्मृतः भरण्यांसंग्रहंकुर्यात्संचकेज्ञेत्रिपुष्करं ऋणकर्मचरैःक्षिप्रैर्ऋणछेदःकुजेहितः पंचकेपंचगणितंत्रिगुणं
चत्रिपुष्करे यमलेद्विगुणंप्रोक्तंहानिवृद्ध्यादिकंबुधैः ऋणंभौमेनकुर्वीतनदेयंबुधवासरे ऋणछेदंकुजेकुर्यात्संचयंसोमनंदने हस्तार्कवारेसं-

क्रांतौयद्दणंस्यात्कुलेषुतत् वृद्धियोगेतथाज्ञेयमृणच्छेदंतुकारयेदिति॥१५॥ अथतीक्ष्णादिषुनष्टादिद्रव्यस्यप्राप्तिंतथाद्रव्यनिक्षेपंचत्ताधेंना
ह तीक्ष्णोग्रध्रुवमिश्राणिपूर्वोक्तानि वायुःस्वाती एषुनष्टादिकंधनंनष्टप्रयुक्तविनिक्षिप्तादिकं सुवर्णादिकंद्रव्यंनैति यथाकात्तंरोहिणीनक्ष
त्रात् भेइष्टनक्षत्रेब्ध्याप्तेचतुर्भक्तेसतित्रिखशेषयोःगतंनएति अथद्रव्यनिक्षेपमाह अत्यांबुरुक्षोक्षिपेत् धनमित्यनुषंगः अंत्यंद्वादशं
अंबुचतुर्थंअनयोःरुक्षिः पापराहित्यं तस्यांसत्यांक्षिपेत् निक्षिपेदित्यर्थः तथाचोक्तं साधारणोग्रतीक्ष्णेषुस्वात्यांद्रव्यनलभ्यते दत्तंप्रयु

तीक्ष्णोग्रध्रुवमिश्रवायुषुधनंनष्टादिकंनैतिकाङ्केब्ध्याप्तेत्रिखशेषयोर्नगतमेत्यंत्यांबुरुद्धौक्षिपेत्॥

क्तंनिक्षिप्तंनष्टमित्याहनारदः अथनृसिंहादिमंत्रविद्यासाधनमुहूर्त्तंतथावृक्षारोपणमुहूर्त्तंउत्तरार्धेनाह विद्यामिति विद्यांमंत्रविद्यांप्रो
क्तवल् वेदविद्योक्तभादौविद्यांमौंज्युक्तभादौइत्याद्युक्ते तथास्वदेवतिथिभेस्वेष्टदेवतिथि नक्षत्रेसाधयेत् गुरुमुखाद्गृण्हीयादित्यर्थः तत्र
आगमोक्तंग्रहणेअनध्यायदोषोनास्ति तत्तुस्वदेवतिथिभे इत्यनेनैवपदेन परिहृतं तथाचोक्तं मृदुध्रुवचरक्षिप्रैर्वारार्कौधर्मसत्क्रियाकार्या
विद्योक्तभैर्दीक्षास्वदेवतिथिभेषुचेति अथवृक्षारोपणमाह हीत्रांविशाखा मूलंप्रसिद्धं ध्रुवमृदूनिपूर्वोक्तानिअश्विनीप्रसिद्धा ईज्यः

पुष्यः करोहस्तः अंबुपः शततारका एभिर्नक्षत्रैरंघ्रिपान् पादपान्रोपयेत् कस्मिन्सजलखाब्जांगे अंगेब्जः अब्जांगं अम्नंलग्नं तस्मिन्नब्जः चलचरराशिश्चंद्रोवा तदब्जांगमुच्यते जलंचखंचजलखे शोभनेजलखेयस्यतत् सजलखं तच्चतत् अब्जांगंचसु जलखाब्जांगं तस्मिन् शोभनेपापग्रहरहितेजलखेचतुर्थेदशमेयस्याब्जांगस्य तस्मिन्नित्यर्थः शेषंपूर्ववत् ॥ १५ ॥ अथवापिकू-

॥ विधांप्रोक्तवदिष्टदेवतिथिभेथद्वीशामूलध्रुवैर्मृद्वन्त्वीज्यकरांबुपैः सजलखाब्जांगेतरून्रोपयेत् ।१५॥
॥ उद्वाहर्क्षहरित्रयादितिहयेज्यर्क्षैस्तडागोदयोज्ञेज्याब्जेस्तनुगेः सितेदशमगेसिध्यंतिसद्वासरे ॥ ७ ॥

पादीन् वृत्तार्धेनाह उद्वाहर्क्षाण्येकादशसंख्यानिपूर्वोक्तानि हरित्रयंश्रवणत्रयं अदितिःपुनर्वसुः हयोश्विनी ईज्यःपुष्यः एभिस्तडागा दयोजलाशयाः सिध्यंतिकैः ज्ञेज्याब्जैस्तनुगेज्ञोबुधः ईज्योगुरुः अब्जश्चंद्रः जलचलंराशिश्च एतैस्तनुगैर्लग्नगतैः कस्मिन्सति सितेदश- मगेसति शुक्रेदशमगेसति कसद्वारेसद्ग्रहवासरेइत्यर्थः तथाचोक्तं चित्रास्वातिपुनर्वसुमृगशिरोमूलाश्विनीरोहिणी हस्तःपुष्यधनिष्ठ

कं शतभिषक् मित्रोत्तरा रेवती एतेषु श्रवणान्वितेषु मकरे लग्ने च कुंभे झषे वापीकूपजलाशयादिखननं शस्तं प्रशस्ते दिने अन्यत्रोक्तं सर्वतोया-
शयारंभः कर्तव्यो विबलैः खगैः लग्नस्थे झे यवाजीवे लग्नभे बूजे स्थिते खगे इति अथोत्तरार्धेन राजदर्शनं शांतिकपौष्टिकं चाह राजेक्षेति श्र
वणत्रय ध्रुव मृदु क्षिप्रैः नक्षत्रैः राजेक्षा राजदर्शनं कार्यम् क्रूरगमं पुनः कैः सौम्यग्रहैः द्विकेंद्रायगैः २।३।४।७।१०।११ लग्नादि केंद्रा १।४।७।१० व्यां

राजेक्षा श्रवणत्रये ध्रुवमृदुक्षिप्रैः स्वकेंद्रायगैः १।४।७।१०।११ सौम्यैः शांतिकपौष्टिके सचरभैः रेतैः स्वधर्मोदये १६

११ गैः क्रूर भग्रहैरित्यर्थः शेषं
प्राग्वत् शांतिकपौष्टिके आह शांतिकपौष्टिके एतैरेव नक्षत्रैः श्रवणत्रयादिभिर्विधेये कथंभूतैः एभिः सचरभैः चरनक्षत्रसहितैः कस्मि
न्सति स्वधर्मोदये शोभनः पापरहितः धर्मो नवमं यस्य स स्वधर्मः स चासावुदयश्च स तथा उदयो लग्नं तस्मिन्नित्यर्थः शेषं पूर्ववत् ॥ १६ ॥

॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथवृत्तार्धेनदिव्यमाह मलिम्लुचेमासेविधुसितेज्यास्ते विधुश्चंद्रः सितःशुक्रः ईज्योगुरुः तेषामस्तेविधोरस्तः कृष्णपक्षेभवति खावष्टमेगो
चरेणसूर्येष्टमेमंदारान्हिशनिभौमदिने खलोदयेपापराश्युदये यद्वाउदयेखलः खलोदयस्तस्मिन् स्थिरतनौस्थिरलग्नेदिव्यंनैवकुर्यात्
अत्रदिव्येकृतेसति अदोदिव्यं अन्यथाविपरीतंस्यात् असत्यवादिनोजयकारीभवतीत्यर्थः अर्थादन्यत्रकर्तव्यमित्यर्थतःसिद्धम् लग्न

दिव्यंनैवमलिम्लुचेविधुसितेज्यास्तेखावष्टमेमंदारान्हिखलोदयेस्थिरतनौकुर्यात्कृतेदोन्यथा ॥ श्रीशै-
ल्यग्रहणायनेषुविषुवेसंकीर्णजातावुपाकृत्युत्सर्गवधूप्रवेशनगयागोदासुनित्याब्दिके ॥ १७ ॥ ७ ॥

बलंप्राग्वत् अथगुरुशुक्रास्तमयोर्मौढ्यदोषः कुत्रकुत्रनास्तीतिवृत्तार्धेनाह श्रीशैलःप्रसिद्धः यत्रमल्लिकार्जुनाभिधानं लिंगमस्ति ग्र
हणंचंद्रसूर्ययोः अयनेदक्षिणोत्तरे विषुवंमेषतुलासंक्रमः संकीर्णजातिर्हीनजातिः उपाकृतिरुपाकर्मउत्सर्गश्छंदसामुत्सर्गः वधूप्रवेश
नंप्रसिद्धम् गोदागोदावरीनित्याब्दिकंप्रतिवर्षेक्रियते यथानवरात्रं ॥ १७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

ईशानाहिबलिः ईशानबलिःप्रसिद्धः अहिबलिःसर्पबलिः हरेःशयनपर्यावर्तनं विष्णोःशयानमाषाढशुक्लद्वादश्यांभवति पर्यावर्त्तनंभाद्रपदशुक्लद्वादश्यांभवति नैत्यकंयानंनित्यगमनं जीर्णगृहंप्रसिद्धं अवरोहःदेवानांदोलारोहःपूजाविशेषः दमनारोपश्चैत्र्यां पवित्रार्पणेश्रावण्यां चातुर्मास्यविधौचातुर्मास्यव्रते अष्टकाः पर्वणियारक्षनाम्नांमासानांकृष्णाष्टम्योष्टकाः मार्गपौषमाघफाल्गुनानांकृष्णाष्टम्यइत्यर्थः उत्साहाःपुत्रोत्सवादयः अंकुरकधारणंवस्त्रधारणं एषुजीवसितयोर्गुरुशुक्रयोर्मूढत्वदोषोनास्तीत्यर्थः नकेवलं

ईशाहिबलौहरेःशयनपर्यावर्तनेनैत्यकेयानेजीर्णगृहेवरोहदमनारोपेपवित्रार्पणे ॥

मेषुगर्भादिसप्तस्वपि गर्भाधन्नप्राशनांतेषुसप्तसुसंस्कारेषुमूढत्वदोषोनगदितः गर्भाधानाद्यन्नप्राशनांतेष्वित्यत्र श्लोकेर्थद्वयमुक्तथाप्यत्रप्रसंगादुक्तं तथाचगर्गः नित्ययानेगृहेजीर्णेप्राशनेपरिजीर्णके वधूप्रवेशमांगल्येनमौढ्यंगुरुशुक्रयोः भृगुः उपाकर्मोपसर्जनंपवित्रदमनार्पणं अवरोहसहेमंतःसर्पाणांबलिरष्टका ईशानस्यबलिर्विष्णोःशयनंपरिवर्तनं कुर्याच्छुक्रगुरोमौढ्येपीतीति विनिश्चयात् धर्मप्रदीपे गोदावर्यांगयायांच श्रीशैलग्रहणद्वये अयनेविषुवेचैवचातुर्मास्यव्रतेषुच उत्सवेषुचसर्वेषुसीमंत

ऋतुकर्मणि शुक्रास्फराज्ययोश्चैवमौढ्यदोषोनविद्यते कालनिर्णये नष्टेशुक्रेतथाजीवेसिंहस्थेचबृहस्पतौ कार्यंचैवस्वदेव्यर्चाप्रत्यब्दंकुल
धर्मतः मत्स्यपुराणे मौढ्येपिचप्रकर्तव्यामिश्रजातिःक्रियाःशुभाः सुरेज्यशुक्रयोर्वर्णीक्रियाश्चौलादिकानचेति ॥१८॥ अथतीर्थ
यात्रानिषेधंप्रेतकर्मनिषेधंचसापवादंवृत्तेनाह शुक्रेज्ययोः अस्तमये अधिकःमासःक्षयःक्षयमासः जनुर्मासोजन्ममासः तेषुजन्मर्क्षके

चातुर्मास्यविधौनजीवसितयोर्मूढत्वदोषोष्टकासूत्साहांबरधारणेषुगदितोगर्भादिसंस्त्वपि॥ १८ ॥
शुक्रेज्यास्तमयेधिकक्षयजनुर्मासेषुजन्मर्क्षकेनापूर्वामरतीर्थदर्शनमियाद्गोदागयाभ्योन्यतः॥ ॥

जन्मनक्षत्रे अपूर्वंप्रथमंतीर्थामरदर्शनं तन्निमित्तंनइयान्नगच्छेत् काम्यामृतेगोदागयाभ्यामृते गोदागययोर्दर्शनंसदैवकुर्यादित्यर्थः
प्रेतकर्मनिषेधमाह एषिति ऐषुगुरुशुक्रास्तादिषु आषाढःप्रसिद्धः सहस्यःपौषः विष्णुशयनेपिपियद्वर्षाधिकलंवितंप्रेतकर्मभवति
तत्त्यजेत् गोदागयातोन्यतःगोदागययोःसदैवकार्यं आषाढशुक्लद्वादश्यादि कार्तिकशुक्लद्वादशीपर्यंतंविष्णुशयनं तथाचोक्तं

बाल्येवायदिवावृद्धेशुक्रेचास्तमुपागते मलमासइवैतानिवर्जयेद्देवदर्शनं व्यासः अधिमासेचजन्मर्क्षेनष्टयोर्गुरुशुक्रयोः तीर्थयात्रान
कर्तव्यागयांगोदावरीविना भृगुः मलमासेप्यनाक्लंतीर्थस्नानंविवर्जयेत् अनादिदैवतांद्रष्टंशुक्रेचिः स्यान्नष्टभार्गवे तीर्थखंडे गुरुशु-
क्रास्तादिदोषःप्रोक्तोयस्तीर्थयातृणां अपूर्वयायिनामेवनत्वसौपूर्वगामिनां पितृखंडे शुक्रस्यास्तमनेचैवदेवेज्यस्यतथैवच प्रेतका-
र्यंप्रदुष्येतप्रथमंवत्सरंविना मांडव्यः मलिनेजन्ममासेवामौढ्येवागुरुशुक्रयोः तीर्थयात्रानकर्तव्यागयांगोदावरींविना गरुडपुराणे

एष्वाषाढसहस्यविष्णुशयनेषप्यंत्यकर्मत्यजेद्यद्वर्षाधिकलंबितंभवतितन्नोदागयातोन्यतः ॥ १९ ॥

नकुर्याद्गुरुशुक्रास्तेपुष्येस्वापेमलिम्लुचे विलंबितंप्रेतकार्यंगयांगोदावरींविना मेधातिथिः अस्तंगतेगुरौशुक्रेपुष्याषाढाधिमासके
प्रेतकार्यंनकुर्वीतगयांगोदावरींविनाप्रेतमंजर्यां प्रेतकार्याणिसर्वाणिव्रतस्नानजपादिकं वर्ज्यंशुक्रेज्ययोरस्तेगयांगोदावरींविनेति ॥ १९

इतिमुहूर्तमार्तंडटीकायांमार्तंडवल्लभायांमिश्रप्रकरणंसमाप्तं ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथानंतरंशांतिप्रकरणमारभ्यते छिद्राण्येतानिविप्राणांयेनध्यायाःप्रकीर्तिताः छिद्रेभ्यः स्त्रवतिब्रम्हाब्राम्हणेनयदर्जितं तत्कालेनस्त्वर
क्षांसिश्रियंब्रम्हयशोबलं सर्वमादायगच्छंतिवर्जयंतीसितंफलमित्यनध्यायेपठनादोप्रसंगात्मौंज्यादिनिषेधाच्चवृत्तद्वयेनानध्यायानाह
पर्व अमापूर्णिमा किंलक्षणंपर्व अम्मादियुक् अष्टंप्रतिपत् आदिश्चतुर्दशीताभ्यांयुक्तयुक्तं अष्टमीप्रसिद्धा इतितिथयश्चतस्त्रस्ति
थयः मध्वादिपक्षद्वये मधश्चैत्रः तदादिषुमासेषुपक्षद्वयंशुक्लकृष्णाख्यंतस्मिन् अनध्यायाःस्युःकीर्तिताःकथिताःबुधैरित्यध्याहारः

पर्वादियुगष्टमीतिथयोमध्वादिपक्षद्वयेनध्यायाश्चरसंक्रमाअयमधौवन्हिश्चशुक्रेयमः ॥ राधेग्नि-
स्त्वसितोयमःशुचिदगाशार्कास्त्रयोदश्यथोमार्गेकृष्णनगम्हाविषदगंकाशाम्नयःकीर्तिताः ॥ १ ॥

अथान्याह चरसंक्रमाः चरराशिसंक्रांतयः मेषकर्कतुलामकरसंक्रांतयइत्यर्थः मधुश्चैत्रस्तस्मिन् वन्हिः वन्हिसंख्याकस्तिथिस्तृ
तीयेत्यर्थः शुक्रेमासे ज्येष्टेमासे यमःद्वितीया अत्रप्रकरणेशुक्लकृष्णपक्षनिर्देशोनदृश्यते तत्रशुक्लपक्षजस्तिथिर्ज्ञेयः राधेवैशा
खेग्निस्तृतीया शुक्लेतुपुनः असितःकृष्णोयमःद्वितीया शुचिदगाशार्काः शुचिराषाढः तस्यदगूद्वितीया आशादशमी अर्कोद्वादशी
त्रयोदश्यपि आषाढशुक्लद्वितीया दशमीद्वादशीत्रयोदशीत्यर्थः अथमार्गेमार्गशीर्षे कृष्णनगमहो कृष्णासप्तमी नवम्योईषदगंकाशा

नयः इषः आश्विनः तस्य दश द्वितीया अंकोनवमी आशा दशमी अग्निस्तृतीया आश्विनशुक्ले द्वितीया नवमी दशमी तृतीयेत्यर्थः ॥१॥ पौषेशाः पौषस्य ईशाः एकादशी शुक्ला तु पुनः असिता कृष्णा दश अंक मुनयः द्वितीया नवमी सप्तम्यः अन्त्ये फाल्गुने कृष्णखेटाद्रिदस्रु खेटो नवमी अद्रिः सप्तमी दस्रु द्वितीया एषां समाहारो खेटाद्रिदस्रु कृष्णं च तत् खेटाद्रिदस्रु च तथा कृष्णनवमी सप्तमी द्वितीया इत्यर्थः माघे अर्का ब्धि दश गद्वयः अर्को द्वादशी अब्धिश्चतुर्थी दस्रु द्वितीया अद्रिः सप्तमी एते शुक्लाः तु पुनः असितजा बाह्वंक पृथ्वीधराः असितजाः कृष्ण

पौषेशा ११ स्वसिता दश २ अंक ९ मुनयो ७ ऽन्त्ये कृष्णा खेटाद्रिदस्र माघेऽर्का १२ ब्धि ४ द २ गद्वय ७ स्वसितजा बाहु २ अंक ९ पृथ्वीधराः ॥ ७ ॥ ऊर्जे द्व्यं २ क ९ रवी १२ श्वरा ११ असितजा दश २ विश्व १३ सूर्यो १२ नभस्येऽग्निः कृष्ण दशगाद्रि विश्व नवमी पैत्र्यं यमोऽन्यः श्रवाः ॥ २ ॥

पक्षजाः बाह्वंक पृथ्वीधराः बाहु द्वितीया अंकोनवमी पृथ्वीधरः सप्तमी ऊर्जे कार्तिके द्व्यंक रवीश्वराः द्विद्वितीया अंकोनवमी रविर्द्वादशी ईश्वर एकादशी एते शुक्लाः तु पुनः असितजा कृष्ण पक्षजाः दश्विश्वसूर्याः दश द्वितीया विश्व त्रयोदशी सूर्यो द्वादशी नभस्ये भाद्रपदे अग्निस्तृतीया शुक्ला कृष्णा दशगाद्रि विश्वनवमी पैत्रं दश द्वितीया अद्रिः सप्तमी विश्वे त्रयोदशी नवमी पैत्रं मघा यमो भरणी अन्यः शुक्लः श्रवाः श्रवणः भाद्रपद शुक्ल श्रवण इत्यर्थः ॥ २ ॥ ७ ॥ ७ ॥ ७ ॥

अथैषांनिर्णयवृत्तिकेनाह यःकश्चिदनध्यायस्तिथिः सपूर्वदिवसेस्तात् प्राङ्मुहूर्तान्निमनःस्यात् अत्रपूर्वदिवसेब्रम्हवेदंनोपठेत् वाइत्यथवा अन
स्मिन् दिवसेपरदिवसेक्षणत्रयगतोभवति अत्रास्मिन्दिवसेब्रम्हनोसंपठेत् पर्वाग्न्यादियुगष्टमी पूर्ववत्सदविभागः इतिचतुस्तिथीस्त्यक्त्वा
एषुअनंतरोक्तेषु अनध्यायेषु शास्त्रस्मृतीवेदांगानिसमभ्यसेत् ऋगमं निखिलेषुसर्वष्वनध्यायेषुउक्तंपठेत् नैत्यकंचपठेत् उक्तमिति यन
था अमावास्यायां अष्टमंस्तुजपेत् व्याहृतिपूर्वकांगायत्रींसप्रणवां सकृत्त्रिवाराक्षोघ्नीः पित्र्यमंत्रान् पुरुषसूक्तमप्रतिरथमन्यानिच पवि

॥ योनध्यायतिथिःसपूर्वदिवसेस्तात्प्राङ्मुहूर्तान्मितोन्यस्मिन्वोदयतःक्षणत्रयगतोब्रम्हेहनैवाभ्यसेत्॥
॥पर्वाग्न्यादियुगष्टमीतिचतिथींस्त्यक्त्वेषुशास्त्रस्मृतीवेदांगानिसमभ्यसेच्चनिखिलेषूक्तंपठेन्नैत्यकं॥ ३ ॥

त्राणीति नैत्यकंसंध्याहोमब्रम्हयज्ञादि तथाचमनुः वेदोपाकरणेचैवस्वाध्यायेचैवनैत्यकेननिरोधस्त्यनध्यायेहोममंत्रजपेषुचेति वे
दोपाकरणानि अंगानिस्मृतिरत्नावल्यां नित्येजपेचनांगेचक्रतौपारायणेपिच नानध्यायोस्तिवेदानांग्रहणेग्राहणेस्मृतः देवतार्चन
मत्राणांनानध्यायःस्मृतःसदा नानध्यायेजपेद्वेदानूरुद्रांश्चैवविशेषतः पौरुषंपावमानंचगृहीतनियमादृतइति स्मृत्यर्थसारे चतुर्दश्य
ष्टमीपर्वप्रतिपद्वर्जितेषुच वेदांगन्यायमीमांसाधर्मशास्त्राणिचाभ्यसेदिति कूर्मपुराणे इंद्रोदद्दिक्षयंप्राप्तेब्रम्हयज्ञंनकारयेत् नज

वैदिकं मंत्रं गायत्र्याष्टोत्तरं शतमिति स्मृतिरत्नावल्यां अत्यंजपेदनध्यायेपर्वण्यल्पतरंजपेदिति ॥ ३॥ अथनैमित्तिकानध्यायान्वृत्त
द्वयेनाह बभ्रुर्नकुलः ओतुमार्जारः एणोहरिः खरः प्र० अग्निः प्र० अजोमेषः अंबुउदकं अहिःसर्पः गजः प्र० अश्वः प्र० उष्ट्रः प्र० अंत्यो-
त्यजजातिः रजकचर्मकादयः मूकः प्रसिद्धः उन्मत्तोमत्तः अनः शकटः यानंशिबिकादि एभिरंतरितेगुरौसति त्र्यहंत्रिरात्रमनध्यायः प्लुवोमं
डूकः खगः पक्षी आदिशब्दात्गोधादि एभिरंतरितेसज्ज्योतिषअनध्यायः अयमर्थः दिवाअंतरितेसति सूर्यास्तमानपर्यंतंअनध्या-

बभ्र्वोत्वेणखराग्न्यजांबुह्यहिगजाश्वोष्ट्रांतमूकोन्मताऽनोयानांतरितेत्र्यहंप्लुवखगाद्यैर्नोचसज्ज्योतिषं ॥
स्त्रीगोस्थ्यंतरुतेहरुत्सवनिशीथाशौचमार्गेषुच छायायांन कपित्थशाल्मलिमधुश्लेष्मंतकादेःपठेत् ४

यः रात्रावंतरितेरात्रिशेषपर्यंतंअनध्यायइत्यर्थः स्त्रीगोस्थ्यंतरितेहः स्त्रीप्रसिद्धागोप्रसिद्धा अस्थिप्राण्यंगं एभिरंतरिते अहर्दिनम
होरात्रं अनध्यायः उत्सवोमहोत्सवोविवाहादिकः निशीथंमध्यरात्रं अशौचंसूतकं मार्गोर्ध्वा एषुनपठेत् चपरंकपित्थशाल्मलिमधु
श्लेष्मातकादेःश्छायायांनपठेत् स्रगमं आदिशब्दात् कोविदारबिभीतकैरंडादीनांग्रहणं ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

ग्रामांतः कुणपेग्राममध्येकुणपेप्रेतेसतिनपठेत् श्वशूद्रनिकटेश्वानशूद्रसन्निधौनपठेत् श्राद्धाशनेश्राद्धभोजनेकृतेसतिजीर्णावधिनपठे
त् वक्रगेमुखगतेतांबूलेसतिनपठेत् ग्रहणात्सकाशात्त्र्यहंनपठेत् तथागुरुक्षितिपतिप्रांतान्मरणात्त्र्यहं उपोत्सर्गतस्त्र्यहं उपउपा
कर्म उत्सर्गश्छंदसामुत्सर्गः तथाउपोत्सर्गतःसकाशात्त्र्यहं भूकंपाशनिपाततस्त्र्यहं भूकंपःप्रसिद्धः अशनिपातोविद्युत्पातः ताभ्यां
त्र्यहं पुरदहेपुरदाहात् स्ववसतिग्रामदाहादित्यर्थः त्र्यहंरिष्टावलोकात् गंधर्वनगरभूतादिदर्शनात् त्र्यहंनपठेत् गर्जेनार्तवकेत्र्य

ग्रामांतःकुणपेश्वशूद्रनिकटेश्राद्धाशनेवक्रगेतांबूलेग्रहणाद्गुरुक्षितिपतिप्रांतादुपोत्सर्गतः॥ भूकं
पाशनिपाततःपुरदहेरिष्टावलोकात्त्र्यहंगर्जेनार्तवकेत्र्यहंसमयजेसज्योतिरंतेसतः॥ ५॥ ७ ॥

हं ऋतौभवःआर्तवः नआर्तवः अनार्तवः अनार्तवएव अनार्तवकस्तस्मिन् अकालगर्जनेजातेसतित्र्यहंनपठेत् समयजेऋतुजेग
र्जेसतिसज्योतिर्यथास्यात्तथानपठेत् दिवागर्जेसति सूर्यास्तपर्यंतं रात्रौगर्जेसति सूर्योदयपर्यंतंनपठेदित्यर्थः सतःअंतेस्वशाखि
मसुरूपस्यमृतौजातेसतिसज्योतिर्नपठेत्॥ ५॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अनध्यायांतरमाह वाद्यादीनांरवेशब्देश्रूयमाणे साम्नांचरवेश्रूयमाणे वातेवातस्यसर्वदाविद्यमानत्वादतिवाते जलेजलमध्येनीहारेधूम
रूपोत्पाते पतितोजातिभ्रष्टः अभिशस्तोमिथ्याभिशापीतत्समीपे धावज्जनालोकने धावन्मनुष्यालोकने ग्रामांतेग्रामसीमास-
मीपेपितृकाननेश्मशानेनपठेत् सतानूनप्रणीते दिवंस्वर्गंप्रतिइतेगतेमृतेसतित्र्यहंनपठेत् तानूनप्त्रंनामघृतं यागेयेनयेनक्र-

वाद्योलूकखरार्तजंबुकरवेसाम्नांचवातेजलेनीहारेपतिताभिशस्तनिकटेधावज्जनालोकने ॥ ग्रा-
मांतेपितृकाननेप्यथसतानूनप्त्रणीतेदिवंतद्वत्तद्भूतिनित्र्यहनचपठेत् भुक्त्वार्द्रपाणिर्नच ॥ ६ ॥

त्विजासहस्पृष्टससतानूनप्त्रंतस्मिन् मृतेसति त्र्यहंनपठेत् तद्वत्सद्भूतिनिमृते सद्भूतंवेदव्रतं चरितंयेनससद्भूति तस्मिन्मृतेत्र्यहंनप
ठेत् भुक्त्वायावदार्द्रपाणिस्तावन्नपठेत् अन्येनध्यायामूलग्रंथतोवगतव्याः ॥ ६ ॥ ७ ॥ ७ ॥ ७ ॥

अथप्रदोषानध्यायानाह राज्यर्धेमदनस्त्रयोदशी यस्मिन्दिनेस्यात् मुनिःसप्तमी रात्रेर्दलयुतेयामेसार्धप्रहरेयद्दिनेस्यात् चतुर्थी
आदिमेप्रथमेप्रहरेयद्दिनेस्यात् अत्रदिनेप्राग्रात्रौपूर्वरात्रौपठनंवर्ज्यं तत्पुनः उपाकरणातःउपाकर्मतः सकाशात्मासरात्रं रात्रेःप्रा
ग्दलेपठनंवर्ज्यं श्वोनध्यायइतिहइत्यत्ररात्रिपठनंवर्ज्यं सदासंध्ययोरुभयोःपठनंवर्ज्यं चौरोपद्रवेणउपलक्षितोयामःप्रहरः तस्मि
न्पठनंवर्ज्यं त्रिदिवसंदुर्भुक्प्रतिग्राहयोः दुष्टोभुक्प्रतिग्रहौदुर्भुक्प्रतिग्रहौ तयोःदुष्टभोजनदुष्टप्रतिग्राहयोः त्रिदिवसंपठनंवर्ज्यं त

राज्यर्धेमदनो१३मुनिर्दलयुतेयामेचतुर्थ्याधिकेप्राग्रात्रौपठनंत्वुपाकरणतोमासंनिशाःप्राग्दले ॥ श्वो-
नध्यायइतीहरात्रिपठनंवर्ज्यंसदासंध्ययोश्चोरोपद्रवयामकेस्त्रिदिवसंदुर्भुक्प्रतिग्राहयोः ॥ ७ ॥

याचश्रीधर्यास्मृतिवचनानि अष्टम्योश्चचतुर्दश्योःपंचदश्योश्चसूतके शावेप्रतिपदोर्यत्रभयेचैवमहोत्सवे रोगेयुद्धेविवादेच घूतेप-
थिनिशीथके नाधीयीताकचिश्चापिनास्नातश्चनतंद्रितः उपाकर्मणिचोत्सर्गेग्रहणेचंद्रसूर्ययोः त्रिरात्रंस्यादनध्यायोमृतेनृपेगु-
रावपि फाल्गुन्यांपौर्णिमास्यांतुचैत्र्यांतुत्र्यहमिष्यते अनध्यायस्तथाषाढ्यांश्रावण्यांकार्तिकेतथा तथैवमार्गशीर्षस्यपूर्णमास्यां
नसंचरेत् अशान्याःपतनेकंपेभूमेर्दाहेपुरस्यच मृगस्यसर्पमार्जारनकुलाघस्वदंतिनां अंतरागमनेजोष्ट्रखराणांचत्र्यहस्मृतं पता

कातोरणादर्शरथयानजलाग्निनाम् मूकोन्मतादिशूद्राणामंतरागमनेप्यहं नारीणामपिसर्वासांगवांन्चैवांतरागमे अहोरात्रमनध्या
योर्गजनेरात्रिसंभवे घनगर्जनेचरात्रौचापररात्रेदिनंस्मृतं दिनंतूभयसंध्यायामथास्नाचांतरागमे पक्षिमंडूकगोधासुनराणांचांतरागमे
दिनेदिवसशेषःस्याद्रात्र्यांरात्र्यांश्चतद्भवेत् श्वसृगालरवेनृणांश्रोत्रियागमनेध्वनि तत्कालिकोप्यनध्यायः तांबूलस्यचभक्षणे श्राद्धे
निमंत्रितोयस्तुभुक्त्वानाध्ययनंचरेत् करिष्यंश्चतथाविप्रःप्राग्विप्राणांविसर्जनात् एतेप्रोक्तास्त्वनध्यायावैदिकास्तांत्रिकास्ततः प्रवक्ष्यंते
ष्टमीद्वंद्वेश्चतुर्दश्यांश्चकेवलेः विषुवद्द्वितयेचैवमयनद्वितयेतथा नपठेत्पाठयेद्धीमान्पुराणमपिसत्तमः अष्टम्यांच्चतुर्दश्यांयावदस्तमिने
रवौ दिनशेषमनध्यायंवैदिकंपरिकीर्तितं तथोदितेदिवारात्रंतत्कालमुदितेतयोः प्रतिपद्यांचसंक्रांतौतत्कालमखिलासुच ।नभोनभस्ययोः
कृष्णेमासयोस्त्रिदिनंद्विजः नसप्तम्यामधीयीतत्रयोदश्यांचपैत्र्ययोः सदात्रयोदशीयावत्प्राक्छिशीयात्तिथिर्भवेत् प्राक्तदन्होपराह्णांतादा
धीयीतनचद्विजः अष्टम्यांच्चतुर्दश्यांप्रतिपद्यांचवर्जयेत् धर्मशास्त्रपुराणेश्चशास्त्रंतात्कालिकंबुधः विमिश्रितास्तुकर्तव्यंसप्तम्यादिषु
यत्नतः पुराणाभ्यसनादीनिपंचदश्योश्चवानवा नांतरागमनेदोषःपुराणादिषुविद्यते नशंस्यतेचतत्कालेप्यतंसंप्राश्यवाबुधः नीयमा
नंशवद्दृष्ट्वामहीस्थंवाद्विजोत्तमः अकालगर्जितादौचपर्वस्वाशौचकादिषु अनध्यायाबुधैःकार्याउपरागादिकेषुच श्वोनध्यायेचशार्वर्यांना-
धीयीतकदाचन स्मृत्यंतरे प्रदोषेचत्रयोदश्यांनाध्येयंप्रतिपत्स्वपि प्रदोषलक्षणं षष्ठीचद्वादशीचैवअर्धरात्रोननाडिका प्रदोषेन

त्वधीयीतत्तृतीयानवनाडिका अर्धरात्रोननाडिका अर्धरात्रात्घटिकया एकयोनेत्यर्थः अत्रनैमित्तिकप्रदोषमाह आपस्तंबः श्रावण्यांपौर्णमा
स्यामध्ययनमुपाकृत्यमासंप्रदोषेनाधीयीतेति प्रदोषःपूर्वरात्रः तथाचगर्गः अध्यायनामुपाकर्मश्रावण्यांश्रवणेनवा यावन्मासंपूर्वरात्रेनाधी
यीतकदाचनेति नारदः अयनेविषुवेचैवशयनेबोधनेहरेः अनध्यायंप्रकुर्वीतमन्वादिषुयुगादिषु मन्वादयोमत्स्यपुराणेभिहिताः आश्वयुक्शु-
क्लनवमीकार्तिकीद्वादशीसिता तृतीयाचैत्रमासस्यतथाभाद्रपदस्यच फाल्गुनस्यत्वमावास्यापौषस्यैकादशीसिता आषाढस्यापिदशमी मा
घमासस्यसप्तमी श्रावणस्याष्टमीकृष्णा आषाढस्यापिपौर्णिमा कार्तिकीफाल्गुनीचैत्रीज्येष्ठीपंचदशीसिता मन्वंतरादयश्चैतेदत्तस्याक्षय-
कारकाः युगादयोविष्णुपुराणेदर्शिताः वैशाखमासस्यतुयातृतीयानवम्यसौकार्तिकशुक्लपक्षे नभस्यमासस्यचकृष्णपक्षेत्रयोदशीपंचदशी
चमाघे उपाकर्मणिचोत्सर्गेत्रिरात्रंक्षपणंस्मृतं अष्टकासुत्वहोरात्रंमृतंतासुचरात्रिषु मार्गशीर्षेतथापौषेमाघेमासेतथैवच तिस्रोऽष्टकाःस
माख्याताः कृष्णपक्षेतुसूरिभिः स्मृतिरत्नावल्यां चतुर्दश्यांयदापर्वप्रागस्ताद्दृश्यतेरवेः अनध्यायंप्रकुर्वीतत्रयोदश्यांतुधर्मवित् विद्युत्स्तनि
तवर्षेतुमहोल्कानांतुसंप्लवे अकालिकमनध्यायमेतुषुमनुरब्रवीत् स्तनितंमेघगर्जितं अनूराधर्क्षमारभ्यषोडशार्क्षेतुभास्करः यावच्चरति
वैतावद्दकालमुनयोविदुः कालेवृष्टौचतत्कालमकालेचत्रिरात्रकं अतिमात्रायवावृष्टिर्नाधीयीतदिनत्रयं अकालवर्षणेजातेजलौकाम्भप्र-
वर्तने एकरात्रमनध्यायमितिकात्यायनोब्रवीत् मेषेचवृषभेचैवतृणाम्भासवतेजलम् भूमिद्रावमनध्यायंकुर्वतिवृषकुंभयोः अतऊर्ध्वं

मु॰भा॰
१०६

द्विपादेषुतृणप्रच्यवनंजलम् तृणप्रच्यवनंतृणप्रवाहः चौरैरुपद्रुतेग्रामेसंभ्रमेचाग्निकारिते अकालिकमनध्यायंविद्यात्सर्वाद्भुतेषुच प्रादुष्कृ-
तेष्वग्निषु विद्युत्स्तनितनिःस्वने सज्योतिःस्यादनध्यायः शेषरात्रौतथादिवा मनुः निर्घातेभूमिचलनेज्योतिषांचोपसर्जने एताना-
कालिकान्विंद्यादनध्यायानृतावपि निर्घातअंतरालिकोध्वनिविशेषः ज्योतिषांचोपसर्जनंचंद्रसूर्ययोःपरिवेषः आपस्तंबः प्रतिगृह्यद्वि
जोवेदानेकोद्दिष्टस्यकेतनं त्र्यहांतेकीर्तयेद्ब्रह्मराहोरन्यत्रसूतके केतनंनिमंत्रणम् कूर्मपुराणे समानविद्येतुमृतेतथासब्रह्मचारिणी
आचार्येसंस्थितेचापित्रिरात्रंक्षपणंस्मृतम् याज्ञवल्क्यः त्र्यहंप्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबंधुषु उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रिये
मृते संध्यागर्जितनिर्घातभूकंपोल्कानिपातने समाप्यवेदंद्युनिशामारण्यकमधीत्यच पशुमंडूकनकुलश्वाहिमार्जारमूषकैः कृतेंतरेत्व
होरात्रंशक्रपातेतथोच्छ्रये पाराशरः सर्पस्यनकुलस्याथ अजमार्जारयोस्तथा मूषकस्यतथोष्ट्रस्यमंडूकस्यचयोषितः पुरुषस्यैल
कस्यापिशूनोश्वस्यखरस्यच एषांयोविततश्चैव अंतरागमनेकृते त्रिरात्रमुपवासश्चत्रिरात्रमभिषेचनं अथतात्कालिकाः खरो
ष्ट्रगर्दभोलूकसामबाणार्तनिःस्वने अमेध्यशवशूद्रांत्यश्मशानपतितांतिके देशेशुचावात्मनिचविद्युत्स्तनितसंप्लवे भुक्त्वार्द्रपाणिरंभो
तरर्धरात्रेतिमारुते पांसुवर्षेदिशांदाहेसंध्यानीहारभीतिषु धावतःपूतिगंधेचशिष्टेचगृहमागते खरोष्ट्रयानहस्त्यश्वनौवृक्षेरणरोह
णे सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुरिति अथानध्यायापवादः मनुः वेदोपाकरणेचैवस्वाध्यायेचैवनैत्यके ननिरोधोस्त्यनध्या
येहोममंत्रजपेषुचेति ७

टी॰
१०६

इतिमुहूर्तमार्तंडटीकायांमार्तंडवल्लभायांअनध्यायप्रकरणंसमाप्तं ॥ ७ ॥ ॥ अथपल्लीसरठयोःप्रकरणं अथपल्लीसरठयोः फलंवन्तै
नैकेनाह दक्षांगोदरनाभिवृत्स्नपतितापल्ली तथाहनुंमुल्का वरांगेउत्तमांगेपतितापल्लीनुः नरस्यशुभदास्यात् उत्तमांगेहनुंविनासर्व
त्रशुभेत्यर्थः अर्थादन्यत्रनशुभा अन्यांगेतुपरःपार्श्वपृष्ठेषु नशुभास्यात् अथस्त्रियाःविशेषमाह स्त्रियाःइदंपुरुषोक्तंफलंवा

दक्षांगोदरनाभिवृत्स्नपतितापल्लीवरांगेहनुंमुल्कानुःशुभदास्त्रियाःफलमिदंवामेतरव्यत्ययात् ॥

मेतरव्यत्याज्ज्ञेयम् वामंवामांगंइतरंदक्षिणांगंतयोर्व्यत्ययोवैपरीत्यं तस्मात्पुरुषस्यदक्षांगेयत्फलमुक्तं तत्स्त्रियाःवामांगेज्ञेयम् पु
रुषस्यवामांगेयदुक्तंतत्स्त्रिया दक्षांगेज्ञेयंपुरुषस्यवामांगेयदुक्तंतत्स्त्रियादक्षांगेज्ञेयमित्यर्थः अर्थाद्यत्रांगेवामेतरविभागाभाव
स्तत्रपुरुषतुल्यंफलज्ञेयं वरांगेतूभयोःसमानमेवफलंवामदक्षिणफलविशेषात् सरठफलमाह इत्याहुःसरठप्रारोहणफलमिति

एवमेव आहुर्मुनयइत्यध्याहारः सरठप्ररोहणेपल्लीवत्फलमित्यर्थः पातेसरठस्यपाते अन्यथाविपरीतंफलमाहुः सरठस्यप्ररोहणेयत्फ
लंतत्तस्यपातेविपरीतफलमाहुरित्यर्थः एकेत्वथा एकेआचार्याः त्वथाफलमाहुः सरठस्यप्ररोहणेएवफलंपातेत्वथाफलंनक्रमंनत्वा
प्यक्रममाहुरित्यर्थः पल्यारोहणकेपिअन्यथाफलमाहुः पल्लीपतनेयत्फलंतत्तस्यारोहणे अन्यथाविपरीतफलमाहुः एकेत्वथा

इत्याहुःसरठप्ररोहणफलंपातेन्यथैकेत्वथापल्यारोहणकेपिवस्त्रसहितंस्नात्वाचरेच्छांतिकं॥१॥

फलमाहुः पल्याःपतनेएवफलंप्ररोहणेत्वथेत्येके आहुरित्यर्थः अथात्रविधिमाह वस्त्रसहितंस्नात्वाचरेच्छांतिकमिति सचैलस्ना
नंकृत्वाशांतिकंशास्त्रोक्तमाचरेत् तथाचज्योतिर्निबंधे पल्लीस्पर्शफलंवक्ष्येयदुक्तंब्रम्हणापुरा ब्रम्हस्थानेभवेद्राज्यंस्थानेलाभोलला
टके कर्णयोर्भूषणावाप्तिर्नेत्रयोःप्रियदर्शनं नासिकायांसुगंधानिमुखेमिष्टान्नभोजनं कपोलयोर्भवेत्सौख्यंहनुदेशेमहद्भयम् ॥

भ्रूकुट्यांविग्रहश्चैवकंठेवाव्यसनागमः कलिर्वंशेसुखंपृष्ठ्यांदक्षेवामेगदादयः दक्षांसेविजयोनित्यंवामांसेशत्रुजंभयं इष्टलाभोभुजेसव्ये
कूर्परेमणिबंधके दक्षेकरतलेद्रव्यंतत्पृष्ठेसव्ययोभवेत् वामेभुजेकूर्परेचमणिबंधेधनक्षयः वामेकरतलेहानिस्तत्पृष्ठेचार्थनाशनं हृदये
राजसन्मानंसौभाग्यंदक्षिणेस्तने दक्षपार्श्वेचभोगाप्तिस्तनेवामेयशोधनं वामपार्श्वेभवेत्पीडावामकुक्षौविशेषस्तथा दक्षकुक्षौसुतावाप्ति
रुदरेचविशेषतः वस्त्राप्तिर्दक्षकट्यांचवामकट्यांसुखक्षयः नाभ्यांमनोरथावाप्तिर्वस्तौगर्भच्युतिर्भवेत् गुह्येमृत्युर्गुदेरोगोदक्षोरौप्रीतिव
र्धनं वामोरौमृत्युतोदुःखंदक्षजानौसुखावहं पत्नहानिर्वामजानौदक्षिणेजघनेसुखं क्लेशःस्याद्वामजंघायांस्फिजिदक्षेर्थवृद्धिकृत् स्फिजि
वामेस्त्रीवियोगोदक्षेगुल्फेप्रियागमः उपप्लवोवामगुल्फेपादयोर्गमनंभवेत् अत्रयद्यपिसामान्येनोभयोर्गमनफलमुक्तं तथापिदक्षि
णपादेगमनाल्लाभोवक्तव्यः वामपादेगमनेहानिर्वक्तव्या पुरोभागेचदुर्वार्तानष्टवार्ताचपृष्ठतः वामेहानिर्धनंदक्षेपरितोभ्रमणेक्षितः
वामदक्षिणभागेनयत्फलंकथितंनृणां विपर्ययेणतत्स्त्रीणांज्ञेयंशेषंद्वयोःसमं इत्थंपल्याःप्रपतनेफलंज्ञेयंविचक्षणैः एतदेवफलंविं
त्सरटस्यप्ररोहणे पल्याःप्ररोहणेचैवपतनेसरटस्यच तयोःफलस्यव्यत्यासात्तद्वदेवहिजायते पल्याःप्ररोहणंरात्रौसरटस्यप्रपात
तनं नातिदुष्टफलंविंद्यात्व्याधिमुग्रंविपर्यये पतनानंतरंयस्यरोहणंयदिजायते पतनेफलमुत्कृष्टंरोहणेल्पफलंभवेत् मृत्युयो
गेवजन्मर्क्षेविरुद्धेगोचरेवैधृतौ चंद्रेष्टमेचसक्रूरेलग्नेविध्नंप्रजायते अंगंदक्षिणमारुह्यवामेनोत्तरतेस्फुटं तदाहानिकरीज्ञेयात्र

त्वयेनतुह्यनिदाः चरणादूर्ध्वगीभूयः सद्योरोहतिशीर्षगं प्राप्तंराज्यंतदादत्ते पल्लीश्वेताविशेषतः चिंतिताभ्यधिकंलाभंस्थिताभोजन
भोजने पादांगुलीषुसंपाताद्धानिश्चमहतीभवेत् पत्न्योः सरठयोर्वापियुग्ममगंशुभेपतंत् दंपत्योर्जायतेप्रीतिर्निंद्यभागेवियोगता ॥
शीर्षस्योपरिपतिताकृष्णायपल्लीसिताचान्या सितम्हगोधास्पर्शेसर्वेष्वंगेषुशोभनाज्ञेयेति कृकलासः पक्षेघस्यमूर्ध्निनदिभ्रशांतये मृत
संजीविनींविधानजपेमुंडितमस्तकः अथपल्लीसरठयोः शांतिः पल्लीसरठयोःस्पर्शेसचैलंस्नानमाचरेत् पंचगव्यंप्राशयित्वाकुर्या
दाज्यावलोकनं शास्तेवाप्यथवाशक्तेयदीच्छेदात्मनःसुखं पुण्याहवाचनंकृत्वाशांतिकर्मसमाचरेत् प्रतिरूपंसुवर्णेनकुर्याद्वित्तानुसा
रतः रक्तवस्त्रेणसंवेष्ट्यगंधपुष्पैःप्रपूजयेत् तदग्रेमृन्मयंरम्यंकलशंजलपूरितं वस्त्रमाल्यैरलंकृत्यस्थापयेत्तंदुलोपरि पंचामृत
पंचगव्यंपंचरत्नानिशक्तितः पंचवृक्षकषायांश्चनिक्षिप्यावाहयेत्ततः पूजयेद्गंधपुष्पाद्यैर्लोकपालान्क्रमेणच अग्निसंस्थापनंकृ
त्वा होमकर्मसमाचरेत् मृत्युंजयेनमंत्रेणसमिद्भिःखादिरैः शुभैः तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकं अष्टोत्तरशतंवापिकुर्या-
द्वित्तानुसारतः अभिषेकंततःकृत्वा पावमान्यस्यचद्विजैः पुण्यवारुणसूक्तैश्चदोषशांत्यैद्विजोत्तमः धौतांबराणिधृत्वाथस्वर्णवस्त्राति
लान्ददेत् ब्राम्हणान्भोजयेदित्थंशांतिकर्मकरोतियः तस्यायुर्विजयोलक्ष्मीः कीर्तिर्बुद्धिःशुभंभवेत् पल्लीसरठयोः शांतिःकथिता
भृगुणापुरा शौनकायमुनींद्रायलोकानुग्रहकारिणे ॥३॥ इतिश्रीमुहूर्तमार्तंड॰ पल्लीसरठयोः शांतिप्रकरणंसमाप्तं ॥ ७ ॥ ७ ॥

अथगोचरप्रकरणंविवक्षुस्तावत्जन्मराशेःसकाशात्कोग्रहःकस्मिन्स्थानेशुभःकस्मिन्नशुभइति चंद्रस्यशुक्लपक्षेविशेषंताराबलंचवदन्ते
नैकेनाह स्वर्क्षाच्चंद्रखलाइति स्वर्क्षात्स्वजन्मराशेःसकाशात् चंद्रखलाःत्रिखारिषुशुभास्युः त्रिःत्रितीयंखंदशमं अरिःषष्ठंतेषुचंद्रखलाः
चंद्रःप्रसिद्धः खलाःपापग्रहाः रविभौमशनिराहुकेतवःशुभाःशुभफलाःभवंति पुनःसप्ताद्यगःअब्जःचंद्रःशुभःस्यात्सगमं आ
पुत्राब्ध्ययधर्ममृत्युषुकविःशुभःस्यात् आपुत्राज्जन्मराशितः क्रमेणपंचपर्यंतं १।२।३।४।५व्ययोद्वादशंधर्मनवमं मृत्युरष्टमं एषुक

स्वर्क्षाच्चंद्रखलास्त्रिखारिषुशुभाःसप्ताद्यगोब्जःपुनश्चापुत्राब्ध्ययधर्ममृत्युषुकविस्त्वास्तत्रिकोणेगुरुः॥

विःशुक्रःशुभस्स्यात् स्वास्तत्रिकोणेगुरुःशुभःस्यात् स्वंद्वितीयं अस्तंसप्तमं त्रिकोणंनवमंपंचमंतत्र गुरुः बृहस्पतिःशुभःस्यात्॥
सौम्योव्यंत्यसमेशुभःस्यात् सौम्योबुधःविगतमंत्यंयस्मात्तद्व्यंत्यं तच्चतत्समंचतथातस्मिन्द्वादशस्थानवर्ज्यसमस्थानेद्वितीयचतुर्थादि
केशुभःस्यादित्यर्थःअखिलाभवगताःशुभाःस्युः सर्वेग्रहाःएकादशस्थानेशुभाःस्फरिति शुक्लेनवेषुद्विगःचंद्रःशुभःस्यात् नकृ-

ष्णपक्षइति अथताराबलमाह निजभाद्यभंनवत्दतंव्यद्रीषुशेषंनसत् निजभंस्वजन्मनक्षत्रं तस्माद्यभंदिननक्षत्रपर्यंतंसंगण्यनव
त्दतंसत् व्यद्रीषुशेषंत्रिसप्तपंचशेषंनसत्नक्षभं अन्यच्छुभमित्यर्थासिद्धं तथाचविशेषसंग्रहव्यवहारसारे पंथाहानिःप्रियंव्याधिर्दैन्यं
स्वास्थ्यंगतिंगदः पापंसुखंबंधनंहानिंकरोत्यर्कःस्वजन्मभात् ॥१॥ वस्त्रंहानिर्धनंरोगंपीडावित्तंप्रियंवसुः भयंसुखंधनंरोगंकरोतींदुः
स्वजन्मभात् ॥२॥ भयंहानिर्धनंवैरंदुःखंलाभंभयंक्षयं पापंलाभंसुखंहानिंजनेभौमफलंक्रमात् ॥३॥ बंधंलाभंभयंवित्तंशो

सौम्योव्यंत्यसमेखिलाभगवताःशक्रेनवेषुद्विगग्वंद्रोथोनिजभाद्यभंनवत्दतंव्यद्रीषुशेषंनसत् ॥ १ ॥

कलक्ष्मींक्षयंधनं रोगंभोगंसुखंहानिंकरोतिज्ञःस्वजन्मभात् ॥४॥ भयंवित्तंरुजंहानिंलाभंशोकंसुखंरुजः मानंदैन्यंधनंपीडांकरो
तिजन्मभाद्गुरुः ॥५॥ जयंवित्तंधनंसौख्यंपुत्रान्वैरंशुभंसुखं धर्मंदुःखंधनंलोभंजनेःशुक्रोददातिवै ॥६॥ भयंशोकंधनंदुःखंहा
निंसुत्दक्षयंमृतिं पापंश्रमंधनंहानिंजनेःपंगुफलंक्रमात् ॥७॥ राहुःकेत्वोफलंशनिकुजवत् ॥१॥७॥ ७ ॥ ७ ॥

अथसर्वेषांग्रहाणांवेधंवृत्तद्वयेनाह षष्ठांत्येइति षष्ठंप्रसिद्धं अंत्यंद्वादशं तस्मिन्मिथःपरस्परंवेधः तद्वत्खजलेसुतायभवनेत्र्यंके अ
यंरवेर्वेधःस्यात् अत्राकन्यासएवव्याख्यानं सतस्पुपलक्षितैःपदैर्वेधाज्ञेयाः तद्यथा षष्ठां६त्ये१२ख१०जले४सुता५य११भवनेत्र्यं
केरवेःसूर्यस्यायंवेधः त्र्यं३के९जन्म१सुते५ख१०के४मृति८भवे११व्यस्ते७षडं६त्ये१२विधोरयंवेधः व्य३कें१२लाभ११सुते५

षष्ठांत्येखजलेसुतायभवनेत्र्यंकेरवेस्यान्मिथस्त्र्यंकेजन्मसुतेखकेमृतिभवेव्यस्तेषडंत्येविधोः॥ त्र्य-
केंलाभसुतेसपत्नतपसोर्व्यर्काशुभानांव्यधोष्टाद्येपुत्रधनेष्टखेंकसहजेर्यंकेभवांत्येविदः ॥ २ ॥ ७ ॥

सपत्न६तपसो९व्यर्काशुभानांव्यधोयं विगतोर्कोयेभ्यस्तेव्यर्काः तेचतेअशुभाश्चव्यर्काशुभाः रविरहितपापग्रहाः तेषामयंवेधइ
त्यर्थः अष्टा८द्ये१पुत्रधने२ष्ट८खके४सहजे३र्यं६के९भवां११त्ये१२विदःबुधस्यायंवेधः॥२॥ ७ ॥ ७ ॥ ७ ॥

व्यस्तेति व्य २ स्ते ७ षा ८ दिमयोः १ ख १० के ५ नव ९ स्फुते ५ त्री ३ द्वो ११ ष ८ पुत्रे ५ त्रि ३ कल्ये १ र्य ६ त्यें १२ क ९ भवे ११ भृगोः शुक्रस्यायंवे
धः गुरोर्वेधः संस्कारप्रकरणेकथितः सोत्रसिद्धोज्ञेयः अत्रवेधविधानेहशशिनोः बुधचंद्रयोः शन्यर्कयोगम्नपरस्परंनोव्यधःस्यात्
परस्परंवेधोनास्ति एतदुक्तंभवति विंध्यहिमाचलयोर्मध्येजन्मराशेः सकाशात् अन्यतमग्रहाधिष्ठितराशिपर्यंतंगणयित्वातद्रा-
शेः सकाशात् यथोक्तवेधस्थानपर्यंतंगणयेत् तत्रयदिकश्चिद्ग्रहोभवतितदागणितोग्रहोविद्धोभवति अन्यदेशेषुजन्मराशेःस

॥ व्यष्टेष्टादिमयोः खकेनवस्फुतेत्री द्वोष्टपुत्रेत्रिकल्पेर्यत्येकभवेभृगोर्ह्शशिनोः शन्यर्कयोर्नोव्यधः॥
॥ विद्धोव्यस्तफलोभवेद्द्विविचरोहेमाद्रिविंध्यांतरेस्वेटर्क्षान्व्यधखेचरंविगणयान्यत्रोभयंजन्मभात् ३॥

काशात् उभयग्रहंतद्वेधस्थानंचगणयेत् यदावेधस्थानंकश्चिद्ग्रहोभवतितदान्योग्रहोनिषिद्धोभवति तत्रसूर्यस्यशनिवेधो-
नास्ति शनेःसूर्यस्य एवंचंद्रबुधयोः परस्परंज्ञेयं अथवेधप्रयोजनमाह विद्धोव्यस्तफलोभवेद्द्विविचरइति विद्धोग्रहोव्यस्तफ
लःस्यात् प्रथमश्लोकोदितंफलंव्यस्तंविपरीतंभवतीत्यर्थः रत्नमालायामपि वामवेधविधिनात्वशोभना अप्यमीशुभफलंदि

शांस्पर्लं तेमृषावचनभाषिणोजनेयांनिहास्यमपिकीर्तिलांछनमिति अथ देशविशेषेणवेधगणनाविशेषमाह हेमाद्रिविंध्यांतरइति अस्यार्थः पूर्वमेवव्या
ख्यातः ॥ ३॥ इतिमुहूर्तमार्तंडेमार्तंडवल्लभायांगोचरप्रकरणंसमाप्तं अथसंक्रांतिप्रकरणम् अथफलंविवक्षुस्तावद्राशिपरत्वेनपुण्यकालंवक्तुमादौ-
नाह व्यात्मनोद्विस्वभावाराशयः मिथुनकन्याधनुर्मीनाः मृगोमकरः एषांसमाहारतस्मिन्नर्कसंक्रमणतः सूर्यसंक्रमणकालात्सकाशात् ऊर्ध्वं-
उपरिखरामघटिकाः पुण्याःस्युः स्थिरेवृषसिंहवृश्चिककुंभानामन्यतमेराशौ कर्कटः प्रसिद्धः अर्कसंक्रमणतः पूर्वंप्रथमं खराम ३० घटिकाःपु

ऊर्ध्वंव्यात्ममृगेर्कसंक्रमणतःपूर्वंस्थिरेकर्कटेजूकाजोभयतःखरामघटिकाःपुण्यामृगेदिग्युताः ॥ ॥

ण्यास्युः जूकोभयतः जूकस्तुला अजोमेषः अनयोरर्कसंक्रमणतः सकाशादुभयतः खराम ३० घटिकाःपुण्यास्युः पूर्वंपंचदशऊर्ध्वंपंचदशेति
त्रिंशद्घटिकाइत्यर्थः एवंसर्वराशिसंक्रमणपुण्यकालमुक्त्वेदानींमकरेपुण्यकालविशेषमाह मृगेदिग्युताइति मकरेताःखराम ३०त्रिघटिकादि-
ग्युताः दशयुताः चत्वारिंशत्रिघटिकाःपुण्याइत्यर्थः तथाचोक्तंज्योतिर्निबंधे संक्रांतिसमयःसूक्ष्मोदुर्लभःपिशितेक्षणैः तस्ययोगादधश्चोर्ध्वं
त्रिंशन्नाड्यः प्रकीर्तिताः अर्वाक्षोडशनाड्यस्तुपरतश्चैवषोडश पुण्यकालोर्कसंक्रांतेःस्नानदानादिकर्मसु त्रिंशत्कर्कटसंक्रांतौपूर्वतः पुण्य-

नाडिकाः मकरेतूत्तराः पुण्याश्चत्वारिंशतिनाडिकाः स्थिरेविष्णुपदेकर्कदक्षिणायनमादितः मृगेसौम्यायनंद्यंगेषडशीतिमुखंपुरः घटेजेविषुवंमध्येपुण्य
दानाद्यनंतकं प्रागर्धरात्रात्पूर्वेह्नः पुण्यंपश्चात्परंदिनं प्रागर्धरात्रादित्येतद्विषुवविषयं कार्मुकंतुपरित्यज्यमृगंसंक्रमतेरविः प्रदोषेवार्धरात्रेवा
तदाभोगःपरेहनि रविसंक्रमणेपुण्येयोनस्नातीहमानवः सप्तजन्मांतरेरोगीदुःखभाक्रुनिर्धनोभवेत् आदित्यपुराणे शतमिंदुक्षयेदानंउप
रागेत्वनंतकं षडशीत्यांसहस्रंतुविष्णुपद्यांतथैवच विषुवेशतसाहस्रंकोटिघ्नंदक्षिणायने शतकोटिगुणंपुण्यंजायतेउत्तरायणेइति अथो

कर्काजांत्यवृषेणसूर्यचलनंनिश्यन्यभंसद्दिवासूर्याराकिर्दिनेतृतीयकरणेप्रांत्येष्टमेदुःखदं ॥ ३ ॥

चरार्धेनसंक्रांतेःसदसत्फलमाह कर्केति कर्कःप्रसिद्धः अजोमेषः अंत्योमीनः वृषःप्रसिद्धः एणोमकरः एतान्सूर्यचलनंनिशिरात्रौसत्स्यात्
अन्यभंप्रति सूर्यचलनंसूर्यसंक्रमणंदिवासत्स्यात् अर्थाद्विपरीतंनशोभनं सूर्याराकिर्दिनेरविभौमशनिदिनेतृतीयकरणेकौलवेप्रांत्येकिंस्तु
घ्ने अष्टमेशकुनौसर्वराशिसंक्रमणंदुःखदंस्यात् तथाचोक्तं मृगकर्काजगोमीनसंक्रांतिर्निशिसौख्यदा शेषेषुसप्तसुदिवाव्यत्ययादशुभं-
भवेत् संक्रांतिर्जायतेयत्रभास्करेभूसुतेशनौ तत्रमासिभवेद्घोरंदुर्भिक्षंवृष्टिचोरजं स्यादुत्थितस्यकिंस्तुघ्नेशकुनेकौलवेरवेः संक्रांतिस्तेतिं

नागेप्रस्फलस्यचतुष्पदे निविष्टस्यगरेविष्यांवणिजेबालवेबवे दुर्भिक्षंरोगबाहुल्यंउर्ध्वेसंक्रमतेरविः स्फुतःकरोतिकल्याणमुपविष्टःसमंफलमिति
॥१॥ ॥ अथसंक्रांतिप्रसंगेनअधिमासक्षयमासयोर्लक्षणंतत्रकर्तव्याकर्तव्यंक्षचमासेनजन्ममरणादौमासज्ञानंवृत्तैकेनाह ब्रम्हाद्यैरिति ब्रम्हा
द्यैःसिद्धांतकर्तृभिः इनमंडलांतःसूर्यमंडलांतः चांद्रःचांद्रोमासउदितः परैराचार्यैःअमांतश्चांद्रोमासउदितः एतदुक्तंभवति अमावास्यांतादपरोऽ
मावास्यांतोयावत्तावदमांतोमासः अमावास्यांतेसूर्यचंद्रमंडलयोर्योगोभवति परतःषड्भिर्घटिकाभिर्वियोगोभवति तस्माद्वियोगादपरोवियोगो-

ब्रम्हाद्यैरिनमंडलांतउदितश्चांद्रस्त्वमांतःपरैर्मासोसंक्रमणोद्विसंक्रमणकोज्ञयोधिकोथोक्षयः ॥

यावत्तावद्रविमंडलांतोमासः सब्रम्हाद्यैःक्षयमासाधिमासनिर्णयविषयेंगीकृतः अपरैरमांतोमासोंगीकृतइत्यर्थः अत्रयद्यपिसूर्यग्रहणेमध्यग्रह-
णकालानंतरंमोक्षस्थितकालःषट् घटिकाभ्योन्यूनोदृश्यतेतथापिसूक्ष्मदर्शिभिःपूर्वाचार्यैःरसनाड्योर्कमंडलमित्युक्तं तत्रागमएवप्रमाणं तत्रअ
फलक्षणोमासः असंक्रमणःसंक्रांतिरहितअधिकोज्ञेयः द्विसंक्रमणकःसंक्रांतिद्वययुक्तक्षयोज्ञेयः अस्योदाहरणं ब्रम्हमतानुसारि
णा श्रीभास्कराचार्येणसिद्धांतशिरोमणौदर्शितं अथसंक्रांतिमासाधिमासस्फुटःस्याद्विसंक्रांतिमासःक्षयाख्यःकदाचित् क्षयःकार्तिकादि

त्रयेनान्यथास्यात्सदावर्षमध्येधिमासद्वयंच१ गतोब्ध्यद्रिनंदे ९७५ मितेशाककालेतिथीशैर्भविष्य ११५ त्यथांगाक्षसूर्यैः १२५६॥ गजाद्यग्निभू-
मिः १३७८ स्तथाप्रायशोयं कुवेदेंदुवर्षैः १५४१ क्वचिद्गोकुभिः १९श्च ॥२॥ श्रीभास्कराचार्येणाब्ध्यद्रिनंद ९७५ मितशाककालादुपरितिथीश-
११५ मितशाककालात्पूर्वंसिद्धांतशिरोमणिर्विरचितः अथएवोक्तं गतोब्ध्यद्रिनंदैर्मितेशाककालेतिथीशैर्भविष्यतीति तत्रगजाद्यग्निभू-
मिः तुल्येशाककाले रविर्मंडलांतमासप्रमाणेनक्षयमासाधिमासौप्रदर्श्येते आश्विनी अमावास्याबुधेचतुश्चत्वारिंशद्घटिका ४४ तस्मिन्ने

कर्माण्यन्यगतीनिनात्रतनुयाद्यज्जन्ममृत्यू क्षयेतन्मासोतिथिखंडयोश्चयमुखेभूत्वेधिकोगण्यते ॥२॥

वदिने सप्तत्रिंशत् ३७ घटिकास्वाती तास्फतिलासंक्रमणमभूत् आश्विनस्तुलासंक्रांतियुक्तत्वाच्छुद्धः कार्तिकी अमावास्याशुक्रेसप्तदशघटि-
का १७ तस्मिन्नेवदिनेत्रिंशत् घटिकास्वातीतास्फवृश्चिकसंक्रांतिरभूत् अयनसंक्रांतित्वाऽधिकः कार्तिकः अपरोमासोवृश्चिकसंक्रांतियुक्तः त-
स्माच्छुद्धोयंकार्तिकः तस्यामावास्याशनौसप्तचत्वारिंशत् ४७ घटिकास्तस्मिन्नेवदिनेएकोनषष्टिका ५९ घटिकास्वातीतास्फधनुःसंक्रमणमभूत्
धनुःसंक्रमणं मार्गशीर्षेजातंतस्यामावास्यासोमेपादोनपंचदशघटिकाः तस्मिन्नेवदिने एकोनत्रिंशत् घटिकास्वातीतास्फमकरसंक्रांतिर-

भूत् इयंमकरसंक्रांतिर्यद्यपि अमांतमतिक्रम्यजातातथापिरविमंडलांतंमासप्रमाणेनपूर्वमासेएवपतिता तस्मात्संक्रांतिद्वययुक्तत्वात्मार्गपौष
युगुलंक्षयाव्हयंजातं माघीअमाभौमे एकचत्वारिंशत् ५१ घटिकास्तस्मिन्नेवदिनेषट्चत्वारिंशत् ५६ घटिकास्वातीतास्कुंभेसंक्रांतिरभूत्
इयमपिसंक्रांतिर्यद्यपिमासमतिक्रम्यजातातथापिमंडलांतमासप्रमाणेनपूर्वमासस्यैवतस्मान्माघः शुद्धः अन्यथामंडलांतमासानंगीकारेनक्ष-
योनाधिमासः तस्मान्माघोवैपरिकीर्तितइत्येतच्छास्त्रमनर्थकंस्यात् आर्यपक्षेतुसंदेहोनास्ति यतोब्रम्हपक्षतिथितःआर्यपक्षतिथिश्चतुर्घटिका-
धिका ब्रम्हपक्षसंक्रांतितःआर्यपक्षसंक्रांतिस्त्रिघटिकोना तस्मादार्यपक्षेसंदेहाभावः तथाचफाल्गुनीअमागुरौषट्घटिकातस्मिन्नेवदिनेपंच
त्रिंशत् घटिका ३५ स्वातीतास्मीनसंक्रांतिर्जातातस्मादयंफाल्गुनः असंक्रांतित्वाधिकःक्षयः कार्तिकादित्रयेनान्यथास्यात्तदावर्षमध्येधि
मासद्वयंचेति तस्योदाहरणंदर्शितं यत्तुब्रम्हपक्षेक्षयमासाधिमासानिर्णयेअमांतंमासंगणयंति तैर्ब्रम्हमतंनविदितं पौलस्तिसिद्धांते स्फुट
गत्यायदाचंद्रोरविमंडलमध्यगः तदूर्ध्वसंक्रमोभानोर्मासःसस्यान्मलिम्लुचः कालनिर्णये संक्रमोयदिभवेद्रवेस्ततोमंडलाद्बहिरनिर्गतेवि
धौ उच्यतेयहिसंक्रमोबुधैःशुक्लमासइतरोमलिम्लुचः लल्लः यदाद्वात्रींशीयातिगभस्तिमंडलंदिवाकरःसंक्रमणकरोत्यनु विवाहयज्ञोत्सवनाशा
हेतुकस्तदाधिमासःकथितःस्वयंभुवा रत्नमालायां सवितृमंडलमेतियदाद्वात्रींशीतदनुसंक्रमणंकुरुतेरविः मखमहोत्सवनाशकरस्तदामुनि
वरैर्गदितोधिकमासकः शार्ङ्गधरफलग्रंथे चंद्रार्कयोस्तुबिंबैक्यंप्रतिपद्दर्शसंधिषु तिथ्यंतात्तदुभयतोरसनाडयोर्कमंडलं तन्मंडलाच्छ त्री

गछेत्ततःसूर्यस्यसंक्रमः मासोसौमलिनःप्रोक्तोनतद्धीनाधिकःस्मृतः पितामहः प्रतिपद्दर्शनंसंधौतुबिंबैक्यंचंद्रसूर्ययोः जवांतरात्संषष्टिघ्नंना
डिकाअर्कमंडलं अत्रकलात्मकबिंबग्रहणं ज्योतिःप्रकाशे दर्शांतएकैकथितोत्रमासःपरैःप्रदिष्टोरविमंडलांतः मतद्द्वयेचेद्रविसंक्रमःस्या
त्सएवपूर्वस्यनचापरस्य पितामहः अष्टाधिमासाःस्युर्नित्यंप्रोच्यैतेफाल्गुनादयः सौम्यपौषोक्षयोनित्यंभवेतामितिनिश्चयं ॥१॥ क्षयोवा
प्यधिमासोवास्यादूर्जइतिनिश्चितं नक्षयोनाधिमासःस्यान्माघोवैपरिकीर्तितः ॥२॥ पंचमासास्तुवैशाखादधिमासाव्यवस्थिताः भवंतिचा
ष्टभिर्वर्षैर्भवे ११ र्वाक ९ निशाकरैः १९।३॥ तथैवफाल्गुनश्चैत्र आश्विनःकार्तिकोधिमाः एतेकिंद्रैः १४१ शरांगैर्वा ६५ कदाचिद्गोकु १९ वत्सरैः
॥४॥ मार्गपौषक्षयौस्यातांकदाचित्कार्तिकोभवेत् अधिमासस्तदाज्येष्ठोभवेन्नित्यंक्षयोयदा ॥५॥ क्षयात्प्रागधिमासस्यनित्यंभाद्रपद-
त्रये आश्विनोऽजौसदास्यातांमादौभाद्रपदःसकृत् ॥६॥ यस्मिन्वर्षेकार्तिकःक्षयोभवतितस्मिन्वर्षेज्येष्ठाधिमासोभवेत् अत्रज्येष्ठश
ब्देनभाद्रपदोज्ञेयः यतःक्षयात्प्रागधिमासःस्यान्नित्यंभाद्रपदत्रयेइतिनियमात् भाद्रपदादीनांत्रयाणांमध्येभाद्रपदोज्येष्ठोजानीयादित्य-
र्थः अथाधिमासक्षयमासयोःकार्याकार्याण्याह कर्माण्यनन्यगतीनिनात्रतनुयादिति अन्यागतिर्येषांतानिअन्यगतीनि तानिअत्रा-
धिमासक्षयमासयोर्नतनुयान्नविस्तारयेत् नकुर्यात् अर्थादनन्यगतीनिकर्माण्यत्रैवकर्तव्यानीतिप्रसिद्धं अनन्यगतीनामनन्यगतीना
मित्यंविचारः यानिकालनिरोधेनप्रोक्तानितान्यनन्यगतीनि यथाऋतौजायामुपेयात् तत्रऋतुःस्वाभाविकःस्त्रीणांरात्रयःषोडशस्मृता

इति मनुना ऋतुप्रमाणमुक्तं अथ षोडशरात्रीणां मध्ये निंद्यदिनान्यपहाय गच्छेत् सऋतुर्यदि मलमास शुद्धमासांशे व्याप्नोति तदा शुद्धमासां शेदोषरहिते गर्भाधानं कुर्यात् तथा चोक्तं अनन्यगतिकं कुर्यान्नित्यं नैमित्तिकं तथा एवमन्यान्यपि विचार्य कुर्यात् गर्भाधानाद्यन्नप्राशनांतकर्मसु मलमासादीनां निषेधो नास्तीति संस्कारप्रकरणे उक्तमस्ति गर्भाधन्नाशनांते पुनर्गुरुसितमौढ्यमित्यादि तथा च गर्भः अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च देवव्रतवृषोत्सर्गचूडाकरणमेखलाः गमनं देवतीर्थानां विवाहमभिषेचनं यानं च गृहकर्माणि मलमासे विवर्जयेदिति तथात्र सूर्योदये आवश्यकर्ममासाख्यं मलमासमृतान्दिकं तीर्थेभच्छाययोः श्राद्धमघानं गपितृक्रियां कुर्यान्मलिम्लुचे चेद्धर्मिमध्ये चेत्सतदाधिकं तत्रस्यान्मासकं मृतकमासात्सद्वादशो यदि प्रेतक्रियां समाप्यात्र कुर्वीताभ्युदयं तथा श्यामाकाग्रयणं कुर्छेत्रस्या वर्ज्यमतोन्यथा अन्यच्च काम्यारंभं वृषोत्सर्गं पर्वोत्सवमुपाकृतिम् मेखलाचौलमांगल्याग्न्याधानोद्यापनक्रिया वेदव्रतमहादानाभिषेकान्वर्धमानकं इष्टं पूर्तं तथा यस्य विध्यलोपोन्यदाकृतौ तत्सर्वमष्टकादन्यदधिमासे विवर्जयेत् सूतकेपि च कर्तव्यं स्नानाद्यं राहुदर्शनेइति पराशरस्मृतौ गर्भे वार्धुषिके भृत्ये प्रेतकर्मणि मासिके सपिंडीकरणे नित्ये नाधिमासं तु वर्जयेदिति स्मृतिरत्नावल्याम् प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितं आगते मलमासेपि तत्समाप्यमसंशयं अथ क्षयमासे जन्मादौ मासज्ञानमाह यज्जन्मेति जन्म श्च मृत्युश्च जन्ममृत्यू यस्य जन्ममृत्यू यज्जन्ममृत्यू क्षये क्षयमासि भवतस्तस्य मासौ तिथिखंडयोर्ज्ञातव्यौ तिथेः प्रथमे र्धे जन्म वा मृत्युर्वा भवति

तदाप्रथममासः द्वितीयेर्धेद्वितीयोमासोज्ञेयः तथाच्चवृहत्कालनिर्णये तिथ्यर्धेप्रथमेपूर्वोद्वितीयेर्धेयथोत्तरः मासाविति बुधैर्ज्ञेयौक्षय
मासस्यमध्यगाविति अथमलमासःकुत्रकुत्रगण्यंनइत्याह चयमुरवइति चयोगर्भाधानादेर्वृध्दिः गर्भस्यकलिलघनांकुरास्थि
चर्मादिचयः प्रतिमासेभवति धनादिनादिकलांतराचयस्तदादिके प्रेष्येभृत्येवेतनदानार्थअधिकोमासोगण्यते तथाचयमः गर्भेवा
र्धुषिकेभृत्येश्राद्धकर्मणिमासिके सपिंडीकरणेनित्येनाधिमासंविवर्जयेदिति पाठांतरव्याख्यानं अधियुगेपूर्वोधिमाःप्राकृतइति एक
स्मिन्नवर्षेअधियुगेअधिकद्वयेसतिपूर्वोधिमाःप्रथमोधिमासः प्राकृतःप्राकृतमासवज्ज्ञेयः अधिकवन्नत्याज्यः अर्थादुत्तरोधिक-
मासोमलमासः तदुक्तं मासद्वयेब्दमध्येचसंक्रमोनभवेद्यदा प्राकृतस्तत्रपूर्वस्यादुत्तरस्तुमलिम्लुचइति ॥ २ ॥ ॥ ७ ॥
॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

अथालंकारमाह श्रीमत्कौशिकेति कौशिकस्यगोत्रापत्यानिकौशिकाः श्रीमंतश्चतेकौशिकाश्चतेतथा तान्पवयतीनितथा हरिपदद्वंद्वा र्पितात्मा हरिर्वासुदेवः तस्यपदद्वंद्वंचरणयुगंतस्मिन्नर्पितः आत्माअंतःकरणंयेनसतथा आत्मादेहेधृतौजीवेइत्यभिधानात् एवंविधो योहरिस्तज्जस्तस्माज्जातोयोनंतनामाकिंलक्षणः इलासुरोचितगुणः इलापृथ्वी तस्यांसुरादेवाब्राम्हणाः तेषुउचितागुणायस्यसतथा जितें द्रियोवेदनिधिः स्मृतिज्ञोदृढव्रतोयज्ञकृदनंदातेत्यादिगुणसंपन्नइत्यर्थः तत्सुतोनारायणःमुहूर्तभुवनोमार्तंडंनामग्रंथमकरोत् मुहूर्ताएव-

श्रीमत्कौशिकपावनोहरिपदद्वंद्वार्पितात्माहरिस्तज्जोनंतइलासुरोचितगुणोनारायणस्तत्सुतः॥ख्या-
तंदेवगिरेःशिवालयमुदक्तस्मादुदक्दापरेग्रामस्तद्वसतिर्मुहूर्तभुवनोमार्तंडमत्राकरोत्॥ २ ॥

भुवनानि मुहूर्तभुवनानि तेषामुद्योतकोमार्तंडइवमार्तंडस्तथातं अत्रकुत्रदेवगिरेःसकाशात् उदक्उत्तरस्यांदिशियत्ख्यातं पुराणप्रसि द्धं शिवालयंधुसृणेशाशिवालयंइतिप्रसिद्धं ज्योतिर्लिंगस्थानमस्ति तस्माच्छिवालयादुदक्उत्तरस्यांदिशियः दापरग्रामोस्ति तत्रदापरग्रा मेअकरोदित्यर्थः किंलक्षणोनारायणः तद्वसतिःतस्मिन् दापरग्रामेवसतिर्वासोयस्यसतथेति॥ २॥ ७ ॥ ७ ॥ ७॥

अथास्य पठने फलश्रुतिं तथा ग्रंथे वृत्तसंख्यां प्रहर्षिण्याह षष्ट्यायुतं शतं १६० तन्मितानि वृत्तानि तैर्बद्धः कृतः योयं मार्तंडः तमेनं मार्तंडं यो नरः पठति स विश्वपूज्यो भवति न केवलं विश्वपूज्यो भवति अपितु बह्वायुःसुखधनमित्रपुत्रभृत्यान् संप्राप्नोति मुहूर्तदानात्साधितकार्यस्य विश्वपूज्यो भवतीति युक्तं जनानां यथार्थमुहूर्तदानात् कार्यसिद्धिजनितपुण्येन बह्वायुरारोग्यादीनि संप्राप्नोतीति युक्तं चपरं अविकलधीर्भवति न विकला धीर्बुद्धिर्यस्येति तथा अत्र मुहूर्तमार्तंडे यद्गर्भाधानादिकमुक्तं तत्रान्यबहुसंहिताग्रंथानपेक्षत्वादविकलधीस्त्वमुक्तं अत एव ती

यः षष्ट्यायुतशतं १६० वृत्तबद्धमेनं मार्तंडं पठति नरः स विश्वपूज्यः ॥ बह्वायुःसुखधनपुत्रमित्रभृत्यान्संप्राप्नोत्य-
विकलधीश्च तीर्थसिद्धिं ॥ २ ॥ त्र्यंकेंद्रप्रमिते वर्षे शालिवाहनजन्मतः कृतस्तपसि मार्तंडोयमलं जयतूद्गतः ॥ ३ ॥

र्थसिद्धिं प्राप्नोति तीर्थं शास्त्रं तस्य सिद्धिस्तां अल्पग्रंथेन बह्वर्थसिद्धेः यद्वा तीर्थं गुरुः तस्य सिद्धिः शास्त्रोपदेशलक्षणा तां यद्वा तीर्थं यागस्तेन कृत्वा यागस्फ-
स्वादिलक्षणा सिद्धिस्तां प्राप्नोति तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषिति विश्वः ॥ २ ॥ अथ ग्रंथस्याशिषमनुष्टुभाह त्र्यंकेति शालिवाहनजन्मतः त्र्यं-
केंद्रवर्षे ॥ १५९३ तपसि माघे मार्तंडो मुहूर्तमार्तंडः कृतः नामैकदेशग्रहणे नामग्रहणं अयं मुहूर्तमार्तंडः अलं अतिशयेन जयतु यद्वा यमलं मार्तंडयुग्मं उद्गतं उद-
यं प्राप्तं जयतु सर्वोत्कर्षेणास्तु ॥ ३ ॥

अथैतद्ग्रंथांगीकारार्थं बुधप्रार्थना स्रग्धरा इति मुहूर्तमार्तंडव्याख्या समाप्ता आसीत्सासमणूरनामनगरे श्रीकौशिकस्यान्वये नंतो वाजसनेयि
पूज्यचरणो माध्यंदिनीयाग्रणीः कृष्णास्तत्तनयः श्रुतिस्मृतिविदामग्रेसरेज्योहरिस्तत्सुत्रः श्रुतिवित्तदात्मजवरो नंतोग्निहोत्री गुरुः १ तत्पुत्रस्तद
नुग्रहात्तधिषणो नारायणः शापरग्रामे शिष्यगणेच्छया निजकृतग्रंथस्य टीकां स्फुटाम् चक्रे स्यां कृपया परोपकृतये शोध्यं दुरुक्तं बुधैर्मद्हसस्य विलो
क्य धार्ष्ट्यमपि ते कुर्वंति नो सज्जनाः ॥ २॥ स्रग्धरा निधिपुरुषार्थक्ष्मा १४९३ समाभिः समाभिः परिमितशाककाले जातमार्तंडटीकाम् लिखति पठ

पूर्ववाक्यार्थमादाय ग्रंथोयं रचितो लघुः ॥ ५
ठनार्थमशक्तानामंगीकार्यो बुधैर्मुदा ॥ ४ ॥

ति विप्रः सोत्र भूयाद्धरिस्त्यांस्रग्धरा निधिपुरुषार्थक्ष्मासमावान्क्षमावान् ॥ ३॥ इति स्वकृतमुहूर्तमार्तंडटीका मार्तंडवल्लभा समाप्ता अग्निहोत्री
त्युपाख्येन सखारामस्य सूनुना विठ्ठलाख्येन कृतिना पुण्यग्रामे पुरे शुभे शाकेंकाद्यग्निभूमौ च दुंदुभिनामवत्सरे वैशाखे शुक्लपक्षे तु चतुर्द-
श्यां समापितः मुद्रितोयं स्वीयशिलायंत्रे स्वस्यार्थसिद्धये ॥ समाप्तः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ , ७ ॥

